**सो[१]ऽभिध्यायन्नुत्पतितान्निहन्या[२]**
**दनाचारेणा[३]प्रतिबुध्यमानः ।**
**नैनं[४] मृत्युर्मृत्युरिवातिभूता-**
**न्येवं विद्वान्यो विनिहन्ति कामान् ।। १२ ।।**

**वादिराजीयम्–** एवमीश्वरेच्छया अनादितः प्राप्ताज्ञानात्मकलिङ्ग-सम्बन्धेन समागतमिथ्याज्ञानात्मकप्रमादाख्यमृत्युसंसर्गेण संसारमापन्नानां विविधसांसारिकदुःखदर्शनेन विषयविरक्तानां मोक्षाधिकारिणां सात्विकजीवानाम् ईश्वरानुग्रहेण कस्मिंश्चिज्जन्मनि स्वोत्तमज्ञानिगुरुसङ्गत्या अभिव्यक्तस्वबिम्बा-परोक्षिणामपरोक्षज्ञानद्वारा मृत्युशब्दवाच्यसंसारोत्तारमभिधायेदानीं राजसतामस-योः प्रवृत्तिं तज्जं फलं चोपदिशति– **य इति । यः** पुरुषः विषयान् **प्रत्य-भीक्ष्णं** प्रतिप्रतिविषयेषु वारं वारं अभिध्यायन् । 'उत्पतिष्णूनि'ति पाठे उत्पतनशीलानित्यर्थः । पूर्वानुभूतानेव विषयान् स्मरन् **अनाचारेण** श्रुति-स्मृत्यविहितस्वात्मार्थकरणाख्यविरुद्धाचारेण **अप्रतिबुध्यमानः** मदर्थं घातिता एते पशवः प्रेत्य नरकिणं मामेवं घातयिष्यन्तीति अजानमानः सन् । यद्वा "ब्रह्मार्पणं ब्रह्महविरि"त्यादिवाक्यार्थानुसन्धानमजानमानः सन् इति वा । **निहन्यात्** हन्ति । इह लोके पशूनिति शेषः । **सः** मृत्युः वृथा-पशुमारणजनितपापाख्यमृत्युः **मृत्युरिव वै** इत्यनेन तमेव पशुघातिनं प्रेत्य नरकगतं पापिनम् **अत्ति** काकबकादिरूपेण, पश्वादिरूपेण वा खादयति । प्रेत्य खादन्ति ते च तानिति वक्ष्यतीति । यः पुरुषः **एवम्** आत्मार्थे प्राणिहिंसकानां महानर्थप्राप्तिरित्येवं ज्ञात्वा **इह** मनुष्यलोके **भूतान्** अनादिसंस्कारवशात् स्वमनस्युद्भूतान् **कामान्** विषयान् अपि

१. य इति पाठान्तरम् । २. उत्पतिष्णून्, प्रत्यभीक्ष्णं इति च पाठान्तरम् ।
३. अनादरेणेति पाठान्तरम् । ४. स वै इति पाठान्तरम् ।

अपुरुषार्थबुद्ध्या वैराग्येण **हन्ति** त्यजन्ति । स एवं विद्वान् । अत्र कामानामननुस्मरणमेव परित्यजनरूपं हननं विवक्षितमित्यर्थः ।

यद्वा 'धीरास्तु धैर्येण तरन्ती'ति पूर्वश्लोकान्त्यचरणे ज्ञानिवर्गलक्षणमुक्त्वा उत्तरश्लोकेन तत्प्रवृत्तिलक्षणमुपदिशति– **य इति । यः** ज्ञानी **अभीक्ष्णं** निरन्तरं **अभिध्यायन्** विषयाणां अनित्यत्वा शुचित्वदुःखानुविद्धत्वादि-दोषदुष्टत्वं चिन्तयन् ।

'उत्पतिष्णूनिति' पाठे विषयविशेषणं स्वमनसि वासनावशादुत्पतनशीलान् पुनः पुनः स्मृतिपथं प्राप्तानिति यावत् । एवम्भूतान्विषयान् **अप्रति-बुद्ध्यमानः** विरक्तस्सन् तान् पुरुषार्थबुद्ध्या अननुस्मरन् निहन्याद्धन्ति । परित्यजनमेव विषयाणां हननम् । परित्यजतीत्यर्थः । विषयविरक्तज्ञानि-पुरुषस्य यद्विषयहननसामर्थ्यमुक्तं तत् ''ज्ञानाग्निस्सर्वकर्माणि भस्म-सात्कुरुतेऽर्जुन'' इत्याद्युक्तरीत्या समूलनाशकमिति जननाशकमृत्युदृष्टान्त-मुखेनोपपादयति– **सवा इति । सवै** विषयालम्बुद्धिसम्पन्नज्ञानिरेव **मृत्युरिव** जनानामपुनरुत्थानरूपहनन-सामर्थ्यसम्पन्नप्रसिद्धमृत्युरिव **मृत्युः** मारको भवतीति शेषः । **यः भूतान्** वासनावशात् मनसि सम्भूतान् **कामान्** विषयान् एवं पूर्वोक्तरीत्या **इह** मनुष्यशरीरे **अभिहन्ति** सर्वतः परित्यजति । स एव **विद्वान्** स एव ज्ञानी विषयालम्पटतया शास्त्राध्ययनवान् एव ज्ञानी भवतीत्यभिप्रायः ।। १२ ।।

**सत्यधर्मीयम्–** तत्तरणमेवं चेत्सुलभमिति भाषते– **स इति । उत्पतितान्** उपर्युपर्यागच्छतः । उत्पतिष्णूनिति पाठे उपर्युपर्युत्पतने-च्छावन्त इव विद्यमानान् । अभिमानिविवक्षयेच्छावत इति वा । **कामान् अभिध्यायन्** भगवध्यानं कुर्वन्यो निहन्यात् । त्यजनमेवेह हननम् । तत्र तन्त्रं **अनाचारेणाप्रतिबुध्यमान इति ।** अनाचारः

तच्चिन्तनम् । अनादरेणेति स्फुटार्थः पाठः । अप्रतिबुध्यमानः तद्विषय-विषयकज्ञानहीन इव सन्तम् । एनं मृत्युः **भूतानि** यथाऽतिथयो विद्वान्कामान् विनिहन्तीत्युक्तविधिफलकथनम् । मृत्युः स्वयम् । नात्ति । अयमेवैवं चेन्मृत्युमृत्युर्भवतीत्यर्थः । उक्तं च–

विषयप्रतिसंहारं यः करोति विवेकतः ।
मृत्योर्मृत्युरिति ख्यातः स विद्वानात्मवित्कविः ।। इति ।। १२ ।।

**कामानुसारी पुरुषः कामाननु विनश्यति ।**
**कामान् व्युदस्य[१] धुनुते यत्किञ्चित्पुरुषोरजः ।। १३ ।।**

**वादिराजीयम्–** संसारमापन्नानां प्राणिनामनवरतं विषयानुवृत्तिरेवानर्थकरी तदननुवृत्तिरेव महानर्थनाशनीति वक्ति– **कामानुसारीति** । यः पुरुषः **कामानुसारी** मनोलौल्येन चर्वितचर्वणादिना तदनुसारप्रवृत्तिमान्, स पुरुषः **कामान्** नश्वरवनितादिविषयान् **अनु** तेषां नाशमनुसृत्य **विनश्यति** तदनुचिन्तनेन स्वयमपि नष्टो भवति । परापरतत्वज्ञानविषये इति शेषः । यः पुरुषः **कामान्** विषयान् **व्युदस्य** वैराग्यपूर्वकं तेषामननुचिन्तनेन तान् परित्यज्य **यत्किञ्चित्** यावन्मितं **रजः** स्वात्मनः पापजन्यं (पापजनकं) रजोगुणं **धुनुते** तत्सर्वं नाशयति । अतो विषयानुचिन्तनं न कार्यमिति ।। १३ ।।

**सत्यधर्मीयम्–** कामानुगाम्यननुगामिनोर्भविष्यदनर्थावाह– **कामानुसारीति । कामान् व्युदस्य धुनुत इति ।** कामादिर्विषयः । तदनुसारी यः पुरुषः सः **कामाननु** अनित्यतया तेषां नाशस्तदन्वयमपि नश्यति । अदर्शनं गतमुखादिः सन् नरकादिकं गच्छतीति यावत् । कामान्

१. विनश्य इति पाठान्तरम् ।

व्युदस्य स्थितश्च पुरुषः **यत्किञ्चित्** पूर्वार्जितं **रजः** मनोमलं धुनुते । तथोत्तरत्रानर्थदं न भवेत्तथा कंपयति । ध्वंसयतीति यावत् ।। १३ ।।

**तमो[1]ऽप्रकाशो भूतानां नरकोऽयं[2] प्रदृश्यते ।**
**मुह्यन्त[3] इव[4] धावन्ति गच्छन्ति[5] श्वभ्रमुन्मुखाः[6] ।।१४।।**

**वादिराजीयम्–** ननु सर्वविषयारम्भभूतशिरीषपुष्पाधिकसौकुमार्यादि-गुणविशिष्टसर्वसुखहेतुस्त्र्यादिदेहशब्दवाच्यविषयवर्गस्य दुःखात्मकत्वमङ्गीकृत्य कथं हेयत्वमुच्यत इत्याशङ्कायां देहशब्दोपलक्षितसर्वस्यापि विषयवर्गस्य नरकसदृशत्वमुपपादयन्परिहरति– **देह इति । भूतानां** स्त्र्यपत्यादीनां **देहो यो** देहवर्गः **प्रदृश्यते** सौकुमार्यादिना सुखसाधनत्वेन प्रत्यक्षतो दृश्यते स देहादिवर्गः **अप्रकाशो नरकः** आच्छादितो नरकः, श्लेष्मासृक्पूय-विण्मूत्रादिभिरन्तः पूर्णत्वात् । तथा चाह मनुः–

अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धपूर्णं मूत्रपुरीषयोः ।।
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।।

इत्यनेन नरकसादृश्येऽप्युपरि चर्मावनद्धः देहः आच्छादितनरक इत्युच्यते । **गृध्यन्तः** सुखानुभवाय दुःखसाधनीभूतनरकसदृशं स्त्र्यादिकाममभिकाङ्क्षमाणाः प्राणिनः । 'गृध् अभिकाङ्क्षण' इति धातोः । **धावन्ति** तत्प्राप्तिसाधनानुष्ठानाय त्वरावन्तो भवन्ति । एवेत्यव्ययबलात् नरकसदृशमातापितृदेहादौ प्रसिद्ध-

---

१. देह इति पाठान्तरम् । २. यः इति पाठान्तरम्। ३. गृध्यन्त इति पाठान्तरम् । ४. एवेति पाठान्तरम् । ५. गच्छन्त इति पाठान्तरम् । ६. च भ्रमात्सुखम् इति पाठान्तरम् ।

नरकेऽपिच पतन्ति इति । तत्र दृष्टान्तमाह– **गच्छन्त इति । उन्मुखाः** पादविन्यासाय भुवोदर्शनमपहाय ऊर्ध्वमुखाः गच्छन्तः पुरुषाः यथा निम्नोन्नत-प्रदेशादर्शनेन गर्ते पतन्ति तथेति ।। १४ ।।

**सत्यधर्मीयम्–** नरको विचार्यमाणेऽत्रैव दृश्यत इति विपक्षे विरक्त्या आह– **तम इति । तमः** अज्ञाननिदानक इति देहः । **अप्रकाशः** नभवति प्रकाशो विवेको यतः सोऽप्रकाशः । स्वस्य स्त्र्यादेश्च । अयमेव भूतानां नरकः तल्लक्षणत्वात् । तथाहि मनुः–

अस्थिस्थाणुं स्नायुनद्धं मांसाशोणितलेपनम् ।
चर्मावनद्धं दुर्गंधि पूर्णं मूत्रपुरीषयोः ।।
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।। इति ।

यथा **उन्मुखाः** उत् ऊर्ध्वं कृतं मुखं यैस्ते जनाः अधोनिरीक्षणा-भावात् । **श्वभ्रं** गर्त्तं गतं गच्छन्ति तत्र पतन्तीति यावत् । तथा मुह्यन्तः धावन्ति । मुख्यै– तदास्पदे नरके पतन्तीत्यर्थः । भ्रमात्सुख-मिति पाठे वस्तुतस्तु तद्दुःखमेव किंतु **भ्रमात्सुखं** तत्वेन प्रतीतं भार्यादिकमुद्दिश्य मुह्यन्ते मदिरादिनेव धावन्ति । अनन्तरं तेषां भूतानां **तमः** हरिगुरुद्रोहो **अप्रकाशः** नरकश्च प्रदर्श्यते । यथायथं तद्दैवानुसारेण फलतयेति योजयन्ति । अयमिति शास्त्रसिद्धत्वेनोक्तिः ।। १४ ।।

**अभिध्या वै प्रथमं हन्ति लोकान्[१]**
**कामक्रोधाननु[२]गृह्याशु पश्चात् ।**
**एते बालान्मृत्यवे प्रापयन्ति**
**धीरास्तु धैर्येण तरंति मृत्युम् ।। १५ ।।**

---

१. चैनं इति पाठान्तरम् । २. कामक्रोधावनु इति पाठान्तरम् ।

**सत्यधर्मीयम्–** अभिध्येति व्याख्यातम् ।। १५ ।।

**अमूढवृत्तेः पुरुषस्येह कुर्यात्**
**किं वै मृत्युस्तार्ण इवास्य व्याघ्रः[१] ।। १६ ।।**

**वादिराजीयम्–** नन्वेवं चेद्देहगेहादिसम्बन्धस्य कदाप्यविनाभावनियमे- नानर्थपरम्परायाश्च क्वचिदप्यविनाशित्वेन कस्यापि संसारानुत्थानप्रसङ्ग इति चेत् अभिध्यादीनां बलीयस्त्वज्ञापनाय अभिध्येत्यादिभिः श्लोकैः तत्सामर्थ्य- मभिधायेदानीं पुनरप्यभिध्येति पूर्वोक्तश्लोकानुवादमुखेनाबुद्धानां तद्वशित्वनियमं प्रदृश्य ''ब्रह्मविदाप्नोति परं'' ''ज्ञानेनामृती भवति'' ''ज्ञानवान्मां प्रपद्यते'' इत्यादिश्रुतिस्मृतितच्छलोकान्त्यचरणोक्तमृत्युमारकशक्तिसम्पन्नज्ञान- मार्गवर्तिनस्तद्भयाभावं दृष्टान्तमुखेनानुवर्णयति– **अमूढवृत्तेरिति । अमूढवृत्तेः** ज्ञानमार्गवर्तिनः **पुरुषस्य** अधिकारिपुरुषस्य **इह** जगति **मृत्युः** संसाराख्य- मृत्युः **किं कुर्यात्** किमनिष्टं कुर्यात्– न किमपीत्यर्थः । अत्र दृष्टान्तमाह– **तार्ण इति । तार्णः** तृणनिर्मितः सर्प इव । अमूढवृत्तेः पुरुषस्येवेति दृष्टान्तेऽप्यन्वेतव्यम् । अयं सर्पस्तार्ण इति भ्रान्तिरहितस्यैवेति । ''तार्ण इवास्य व्याघ्र'' इत्यपि पाठः । अनेन ज्ञानिनां संसारभयं नास्तीति सिद्धम् ।। १६ ।।

**सत्यधर्मीयम्–** एतदतिगतिः कस्येत्यत आह– **अमूढवृतेः ।** अमूढानां विवेकवतां वृत्तिर्यस्य तस्य कामाद्यनाक्रान्तचेतस्कस्य । अस्य पुरुषस्य मृत्युः **तार्णः** तृणमयो व्याघ्रः यथाऽकिञ्चित्कारी तथा किं कुर्यात् । नरकादिदुःखं न भोजयेत् । स्वोपमर्दात् । अमोह एव हेतु- स्तदुपमर्द इति ।। १६ ।।

---

१. सर्प इति पाठान्तरम् ।

**अमन्यमानः क्षत्रिय किञ्चिदन्यत्[१]**
**नाधीयीत निर्नुदन्निवास्य[२] वायुः ।**
**सक्रोधलोभो मोहवानन्तरात्मा[३]**
**सवै मृत्युस्त्वच्छरीरे य एषः ।। १७ ।।**

**वादिराजीयम्–** मुमुक्षोर्मृत्युशब्दवाच्यसंसारोत्तरणाय भगवदपरोक्षज्ञानमेव परमं साधनं नान्यदित्युक्तभगवदपरोक्षप्राप्तयेऽप्यनपरोक्षदशायां सद्गुरुमुखात्सच्छास्त्राभ्यासस्तदभावे अधिकारिणोऽपि त्रिदिवनिरयभूमिषु पुनः पुनः परिभ्रामकक्रोधलोभोत्थमोहभयात्मकप्रमादरूपो मृत्युः सर्वदा शरीर एव वसतीति यत्तत्तवाप्यनुभवसिद्धं तदुपदिशति– **अमन्यमान इति** । हे क्षत्रियेति धृतराष्ट्रसम्बुद्धिः । **यः** पुरुषः **अन्यं** सुखसाधनाय स्त्र्यपत्यादिविषयवर्गादन्यं **कञ्चित्** पुरुषार्थम् **अमन्यमानः** अप्रतिबुध्यमानः सन् **नाधीयीत** पुरुषार्थबुद्ध्या वेदादिसच्छास्त्राभ्यासं न कुर्याच्चेत् **अस्य** सच्छास्त्राभ्यासाकारिणः पुरुषस्य **निरुणत्** नितरां तृणादिकं नुदति प्रेरयतीति निरुणत् । 'नुद प्रेरण' इति धातुः । **अभि** सर्वतो भ्रममाणः **वायुः** चक्रवायुरित्यर्थः । वा उपमा । "वा विकल्पोपमानयोः" (इत्यमरः) ।

क्रोधलोभाभ्यां समुत्पन्नमोहभयाविष्टमनाः पुरुषः विषयसुखातिरिक्तं सुखं अबुध्यमानस्सन् पारत्रिकमहासुखदायकं सच्छास्त्राभ्यासं न कुर्याच्चेत्स पुरुषश्चक्रवातवत् संसार एव पुनः पुनः परिभ्रमतीत्यभिप्रायः । एवमुपदिशन्परमदयालुः सनत्सुजातः धृतराष्ट्रस्य वैराग्यजननाय महासज्जनपाण्डवपक्षपातित्वेन तदीयराज्यादानरूपो मयोक्तो लोभमोहात्मकः प्रमादाख्यो मृत्युस्त्वच्छरीर एव प्रतिभातीति शृङ्गिग्राहकतयोपदिशति– **स इति** ।

१. कश्चिदन्यं इति पाठान्तरम् । २. निर्णुदभि वास्य इति पाठान्तरम् । ३. क्रोधाल्लोभान्मोहभयान्तरात्मेति पाठान्तरम् ।

धृतराष्ट्रस्यापि पाण्डवाः राज्यार्धं याचंत इति कोपः । भाग्यहानिभयान्नदेय-मिति लोभः । क्रोधान्मोहः लोभाद्द्वयमिति ।। १७ ।।

**सत्यधर्मीयम्–**

चतुर्वेद्यपि यो विप्रः सूक्ष्मं न परिविन्दति ।
वेदभारभराक्रान्तः सवै ब्राह्मणगर्दभः ।।

इति वचनाद्भगवदवगमविकलस्य वेदाध्ययनमप्यकिञ्चित्करमित्याह– **अमन्यमान इति ।** क्षत्रियेति मध्यस्थग्रहणमादिमान्तिमोपलक्षणम् । तमुद्दिश्यैवेदानीं प्रवृत्तेस्तत्पुरस्कृतिः । **अन्यत्** जगतः भिन्नम् । **किञ्चित्** ब्रह्म **अमन्यमानः** अजानानः । अधीयीतचेदपि नाधीयीत एव । नैष्कल्पात् । **आस्यवायुः** मुखतो निर्गतो वायुः इव यथा **निर्नुदन्** शिलादिकं पतितं पुरतो प्रेरयन्नोत्प्लवयंस्तथा स्वदुरिष्ठमनुदन् यः सक्रोधलोभः **मोहवांश्चान्तरात्मा** मनः । त्वच्छरीरे वर्तते । स एष एव मृत्युस्तद्रूप इति । अस्य वायुः । वा आयुरिति पदानि । वायुश्चक्रवात-श्चक्रे च यत्तृणादि स्वमध्ये तद्बहिः स्वमण्डलान्न निर्नुदन्निवायमन्य-मानोऽन्यं भगवन्तं चेत् तदध्ययनं नाध्ययनमित्येव न किन्तु जननमरण-मण्डलान्न बहिर्यापनशक्तिस्तस्येति विवृण्वते । एतदायुः प्रणुदन्निवाध्यय-नादिरिति च । केचितु एवं चेद्वेदाद्यधीतिरपि तरणोपाय इति विपक्षे दण्डं दर्शयति– **अमन्यमान इति ।** अन्यं सर्वविलक्षणं भगवन्त-ममन्यमानः । वेदांश्च नाधीयीत सच निर्नुदन्वायुरिव । भ्रमणे चक्रवात इव वृथायाससंपादनमिति भावः इति विवृण्वन्ति । इतरत्समम् । आत्मैव ह्यात्मनो बन्धुरित्यादेः । मन एव मनुष्याणां कारणं बन्ध-मोक्षयोरित्यादेः ।। १७ ।।

**एवं मृत्युं जायमानं विदित्वा**
**ज्ञाने तिष्ठन्न बिभेतीह[1] मृत्योः ।**
**निवेश्यते विषये तस्य मृत्यु-**
**र्मृत्योर्यथा विषयं प्राप्य मर्त्यः ।। १८ ।।**

**वादिराजीयम्–** **एवम्** उक्तप्रकारेण **जायमानं** लिङ्गसम्बन्धेन प्राप्ताह-मित्यादिरूपमिथ्याज्ञानात्मकप्रमादवशादुत्पद्यमानं **मृत्युं** संसाराख्यमृत्युं **विदित्वा** तत्स्वरूपं ज्ञात्वा **ज्ञानेन** देहगेहादिविषयवर्गस्य सर्वत्र नश्वरज्ञानेन हेतुना **तिष्ठन्** निवृत्तिमार्गे अचाञ्चल्येन विद्यमानःसन् । ''ष्ठागतिनिवृत्ता''-विति धातुः भगवन्निष्ठायां वा, विष्णुसर्वोत्तमत्वज्ञानेवा । एवंविधो ज्ञानी पुरुषः **मृत्योः** संसाराख्यमृत्योः, सकाशादिति शेषः; न बिभेति । कुत इति चेत् **तस्य** एवंविधस्य ज्ञानिनः विषये **मृत्युः** पूर्वोक्तसंसाराख्यो मृत्युः **विनश्यते** नाशम् आप्नोति । अत्र नाशो नाम यावल्लिङ्गनाशस्तावदकार्य-कारिता, अनन्तरं स्वरूपतो नाश इति । संसाराख्यमृत्युनाशविषये दृष्टान्तमाह **मृत्योरिति । मृत्योः** जनमारकमृत्योः **विषयं** मार्गं प्राप्य **मर्त्य इव** मरणशीलः पुरुष इव । अनेन मुमुक्षुणा महानर्थनिवृत्तये ज्ञानमेव सम्पादनीयं, नान्यदिति सिद्धम् ।। १८ ।।

**सत्यधर्मीयम्–** ज्ञानाग्निः सर्वकर्माणि भस्मात्कुरुतेऽर्जुनेत्यादेर्ज्ञानिनो नैतद्भीतिरित्याह – **एवमिति । मृत्युं** प्रमादादिकं जायमानं **विदित्वा** प्रागेव ज्ञात्वा ज्ञाने हरिसर्वोत्तमज्ञाने । **तिष्ठन्** वर्तमानः इहैतच्छरीरे सन्नपि न बिभेति । मृत्योर्भीतिर्नेति । यथा **मृत्योः** उक्तरूपस्य **विषयं** गोचरतां प्राप्य मर्त्यः **निवेश्यते** क्लिश्यति । तथा **तस्य** ज्ञानिनः विषये मृत्युः निवेश्यते तदधीनो भवति । नतं क्लेशयतीति यावत् । उक्तं च

---

[1] बिभेतीत्येव पाठः ।

नाममहोदधौ । ज्ञानसंस्थानसद्भावो ज्ञानाग्निर्ज्ञानवज्रभृत् । मृत्युं हन्तेति विख्यातः सवीरोऽपीतमत्सर इति ।। १८ ।।

**धृतराष्ट्र उवाच–**

**येऽस्मिन्धर्मानाचरन्तीह केचि-**
**त्तथाऽधर्मान्केचिदिहाचरन्ति ।**
**धर्मः पापेन प्रतिहन्यते स्वि-**
**दुताहो धर्मः प्रतिहन्ति पापम् ।। १९ ।।***

**सत्यधर्मीयम्–** मृत्युजयप्रकारं श्रुत्वैक एव धर्मानधर्मांश्च कृतवांश्चेत्कैः केषामुपमर्द इति तत्प्रकारं वदेति पृच्छति– **य इति । अस्मिन्** लोके एतच्छरीरेच **केचित्** अधिकारिणः । **धर्मान्** आचरन्ति पुण्यकर्माणि कुर्वते । तथा केचिदधर्मांश्चाचरन्ति । पापेन धर्मः प्रतिहन्यते । स्वफलानुपलम्भकतया पापपराभूतो धर्मो भवतीति । आहोस्विदित्यन्वयः । धर्मः प्रबलः सन्न्यायं प्रतिहन्ति । एतन्मध्ये कतरज्जाय इति वदेति तात्पर्यम् ।। १९ ।।

**सनत्सुजात उवाच–**

**उभयमेव तत्रोपभुञ्जते फलं**
**धर्मस्यैवेतरस्य च ।**
**धर्मेणाधर्मं प्रणुदतीह विद्वान्**
**धर्मो बलीयानिति तस्य विद्धि ।। २० ।।***

**सत्यधर्मीयम्–** ये तत्र तयोर्मध्ये स्वयमज्ञाश्चेत् । धर्मस्य इतरस्या-

---

* अयं श्लोकः वादिराजीये नास्ति । अयमपि श्लोकः वादिराजीये नास्ति ।

धर्मस्य चेति । **उभयं फलं उपभुञ्जते** कदाचित्सुखं कदाचिद्दुःखं भुञ्जते । यश्च **विद्वान्** ज्ञानी धर्मेण अधर्मं प्रणुदति । **तस्य** विदुषः धर्मः **बलीयान्** अधर्ममर्मभेदनपटुः । ज्ञानसाहित्यात् इति विधिः ।। २० ।।

**धृतराष्ट्र उवाच–**

**यानेवाहुरिज्यया साधुलोकान्**
**द्विजातीनां पुण्यकृतां[१] सनातनान् ।**
**तेषां परार्थं[२] कथयन्तीह वेदा-**
**नैतद्विद्वन्नैति[३] कथन्नु कर्म ।। २१ ।।**

**वादिराजीयम्–** एवं सनत्सुजातेन मृत्युशब्दवाच्यं संसारभयं परिहृत्य स्वरूपानन्दाविर्भावकारणं ज्ञानात् नान्यदिति श्रुतिसम्मत्या प्रतिपादितम् । तदनन्तरं "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादि श्रुत्युक्तज्योतिष्टोमादि-यज्ञानुष्ठानजनितसुकृतेनापि महाफलप्राप्तिश्रवणात् किमर्थमन्ययोगव्यवच्छेदेन पारत्रिकमहाफलप्राप्तये ज्ञानस्यैव मुख्यकारणत्वमिति शङ्कां मनसि निधाय ज्ञानस्यैव मुख्यत्वप्रतिपादकानां "नान्यः पन्थाः अयनाय विद्यत" इत्यादि-वाक्यानां, कर्मणोऽपि मुख्यत्वप्रतिपादकानां "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" "स्वर्गकामो यजेत" इत्यादिवाक्यानां परस्परविरोधमाशङ्क्य पृच्छति– **यानिति** । **यान् सनातनान्** नित्यान् **पुण्यतमान्** वैकुण्ठादीन् लोकान् **द्विजातीनां** ब्राह्मणादीनां ये वेदाः । यानित्यनेन ज्ञानात्मकानिति वा, "यति ज्ञानं समुद्दिष्टमिति" वचनात् । **इज्यया** वेदविहितयज्ञानुष्ठानेन आहुः त एव वेदाः केषुचित्स्ववाक्येषु तेषां विहितयज्ञानुष्ठायिभिः प्राप्तानां लोकानामेव **अपार्थान्** अपगतः अर्थः मोक्षादिर्येभ्यः तान् धर्मानाहुः ।

---

१. पुण्यतमान् इति पाठान्तरम् । २. अपार्थानिति पाठान्तरम् । ३. एवं विद्वानेति इति पाठान्तरम् ।

धर्मानिति शेषः । एवं सति परस्परं स्ववाक्यानां विरोध इत्यभिप्राय इति **एवं विद्वान्** कर्मप्राप्यलोकानामनित्यत्वं जानमानो ज्ञानी पुरुषः **कर्म** वेदविहितयागादिकर्म कर्तुमिति शेषः । **कथं एति** कर्तुं कथं प्रवृत्तो भवति । वेदविहितयागादिकर्मणां यदि वैयर्थ्यं तर्हि ज्ञानिभिः कुतस्तत्र प्रवृत्तिः क्रियते ? इति प्रश्नाभिप्राय इति ।। २१ ।।

**सत्यधर्मीयम्**– ज्ञानस्यैव मोक्षहेतुत्वं यदुक्तं तदाक्षिपति– **यानिति ।** पुण्यकृतां द्विजातीनां **इज्यया** ज्योतिष्टोमादिना **सनातनान्** नित्यान् **साधुलोकान्** साधुभिः सज्जनैरारूढान् । लोकान् यानाहुः **तेषां** सत्यपर्यन्तानां लोकानां **परार्थं** परार्थत्वं अविनाशित्वमिति यावत् । **वेदाः** अक्षय्यं हवै चातुर्मास्ययाजिनः सुकृतमित्याद्याः कथयन्ति । तस्माद्विद्वान् **एतत्** तादृश-लोकनकं कर्म कथं **नैति** नानुतिष्ठति । एवं वेदबोधितनित्यताकलोकप्रापकं कर्म कथं नानुतिष्ठतीति भावः । यद्वा कर्ममोक्षसाधनतां कथं नैतीति वा । अस्मिन्पक्षे विद्वन्निति सम्बुद्धिः ।। २१ ।।

**सनत्सुजात उवाच—**

> **एवं हि विद्वान्प्रतियाति तत्र**
> **तथाऽर्थजातं च वदन्ति वेदाः ।**
> **स नेह आयाति परं परात्मा**
> **प्रयाति मार्गेण निहन्ति मार्गान् ।।***

**वादिराजीयम्**– एवं धृतराष्ट्रेण पृष्टः सनत्सुजातः यद्यपि ''ज्ञानेनानन्दी भवति'' इत्यादिना महाफलरूपमोक्षप्राप्तये भगवज्ज्ञानमेव मुख्यसाधनमथापि ''कर्मणा ज्ञानमातनोति'' इत्यनेन स्वयोग्यज्ञानाभिव्यक्त्यै ''असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः'' इत्युक्तप्रकारेण विष्ण्वनुसन्धानपूर्वकं कृतस्य

---

* सत्यधर्मीये पाठे '*' एतल्लक्ष्मोपेताः श्लोकाः न वर्तन्ते ।

कर्मणोऽपि ज्ञानव्यक्तिद्वारा पारत्रिकपुरुषार्थसाधनत्वेऽपि बहिर्मुखानां परस्परं विरोधवत्प्रतीयमानानां सर्वेषां वेदवाक्यानां ''सर्वे वेदा यत्पदमामनन्ति'' इत्यादावुक्तरीत्या ज्ञानिभिः सर्वेषां कर्मणामनुसन्धानेनाचर्यमाणत्वान्न विरोध इति वदन् तच्छङ्कामपनुदति— **एवमिति** । **एवं विद्वान्** ''क्षीणे पुण्ये मर्त्यलोकं विशन्ति'' इत्यादावुक्तरीत्या काम्यकर्मणा प्राप्तस्वर्गादीनाम-नित्यत्वेनापुरुषार्थतां जानन् ज्ञानी **तत्र** ज्ञानपूर्वकमनुष्ठीयमानकर्ममार्गे प्रतियाति भगवज्ज्ञानप्राप्तये विष्ण्वर्पणबुद्ध्या प्रवृत्तो भवति । तथा इत्यव्ययं तथासर्तीति, एवं कर्मकलापे । ज्ञानिना अनुसन्धानेन क्रियमाणे सति । **वेदाः** ''अपाम सोमममृता अभूम'' इत्यादयो वेदा **अर्थजातं** धर्मादि-मोक्षान्तपुरुषार्थवर्गं वदन्ति । चेत्यनेन तथाविधज्ञानिन इति शेषः । **सः** सर्वपुरुषार्थभागी, ज्ञात्वा कर्मानुष्ठानशीलः पुरुषः **इह** संसारमार्गे, मृत्युलोके वा; **नायाति** पुनरागतो न भवति । तर्हि कुत्र गच्छतीति चेत्, **परात्मा** परे भगवति आत्मा मनो यस्य सः परात्मा भूत्वेत्यर्थः । 'पृ पालन-पूरणयो'रिति धातोः सर्वजगत्पालनादिकर्तारं **परं** श्रीनारायणं **मार्गेण** अर्चिरादिमार्गेण **प्रयाति** गतो भवति । यद्वा **परं** वैकुण्ठादिस्थानं वा प्रयाति । **मार्गान्** मृग्यन्ते, अन्विष्यन्ते जनैरिति मार्गा विषयाः, तान् मार्गशब्दवाच्यान् विषयान् । 'मृग अन्वेषण' इति धातुः । **निहन्ति** नाशयति चेति । 'हन हिंसागत्योः' इति धातुः ।। १९ ।।

धृतराष्ट्र उवाच—

**कोऽसौ नियुङ्क्ते तमजं पुराणं**<br>
**स चेदिदं सर्वमनुक्रमेत ।**<br>
**किं वास्य कार्यमथवा सुखं च**<br>
**तन्मे विद्वन्ब्रूहि सर्वं यथावत् ।।**

**वादिराजीयम्**– एवं सनत्सुजातोपदेशेन सर्वेषां वेदवाक्यानां ज्ञात-भगवद्विषयज्ञानो धृतराष्ट्रः 'परं प्रयाति' इति श्रुत 'पर' शब्दवाच्य-वस्तुस्वरूपं ज्ञातुकामः पृच्छति– **क इति । हे विद्वन्** सर्वज्ञ, सनत्सुजात! **अजं** जननरहितं पुराण मनादिकालीनं (तं) जीवं **नियुङ्क्ते** नियोजयति, यः प्रेरयति **असौ** पुरुषः कः को वा भवितुमर्हति, किं लक्षणक इत्यर्थः । **सः** जीवनियामको विष्णुः **इदं सर्वं जगत् अनुक्रमेत** सर्जनादिप्रवृत्या संसारयतीति **चेत् अस्य** विष्णोः **किं वा कार्यं** सृष्ट्यादिकरणेन किं वा साध्यं, प्रयोजनं? । भगवान्किं प्रयोजनमुद्दिश्य सर्जनादिकं करोतीत्यभिप्रायः । **किंवा सुखं** ? सर्जनादिनाऽस्य सुखं वा किं भवति ? निष्प्रयोजनः करोतीति चेत् "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इत्यनेन सप्रयोजन इव भातीत्यतः तत्सर्वं मदीयप्रश्नजातं यथावत् याथार्थ्येन ब्रूहि ।

***सनत्सुजात उवाच—**

> **[१]अयं महानत्र बिभेद योगै-**
> **रनादियोगेन भवन्ति नित्याः ।**
> **तथास्य नाधिक्यमुपैति किञ्चि-**
> **दनादियोगेन भवन्ति पुंसः ।।**

---

१. दोषो महानत्र विभेदयोगे ह्यनादियोगेन भवन्ति नित्याः । इति पाठान्तरम् ।

* इत आरभ्य वादिराजीये द्वितीयोऽध्यायोत्रारब्धः इति पूर्वमुद्रिते वर्तते । परं अष्टत्रिंशच्छ्लोके एवं गदितं वादिराजश्रीमच्चरणैः– "सर्वज्ञः सनत्सुजातः प्रमादं वैमृत्युमहं ब्रवीमि इत्यारभ्य यावदध्यायान्तमिति । तेन ज्ञायते नात्र द्वितीयाध्यायरम्भ इति । परं वादिराजीयकोशे केचनाधिकाः श्लोकाः सन्ति । तेच श्लोकाः निरङ्काः मुद्रिताः ।

कर्मणोऽपि ज्ञानव्यक्तिद्वारा पारत्रिकपुरुषार्थसाधनत्वेऽपि बहिर्मुखानां परस्परं विरोधवत्प्रतीयमानानां सर्वेषां वेदवाक्यानां ''सर्वे वेदा यत्पदमामनन्ति'' इत्यादावुक्तरीत्या ज्ञानिभिः सर्वेषां कर्मणामनुसन्धानेनाचर्यमाणत्वान्न विरोध इति वदन् तच्छङ्कामपनुदति— **एवमिति** । **एवं विद्वान्** ''क्षीणे पुण्ये मर्त्यलोकं विशन्ति'' इत्यादावुक्तरीत्या काम्यकर्मणा प्राप्तस्वर्गादीनाम-नित्यत्वेनापुरुषार्थतां जानन् ज्ञानी **तत्र** ज्ञानपूर्वकमनुष्ठीयमानकर्ममार्गे प्रतियाति भगवज्ज्ञानप्राप्तये विष्ण्वर्पणबुद्ध्या प्रवृत्तो भवति । तथा इत्यव्ययं तथासतीति, एवं कर्मकलापे । ज्ञानिना अनुसन्धानेन क्रियमाणे सति । **वेदाः** ''अपाम सोमममृता अभूम'' इत्यादयो वेदा **अर्थजातं** धर्मादि-मोक्षान्तपुरुषार्थवर्गं वदन्ति । चेत्यनेन तथाविधज्ञानिन इति शेषः । **सः** सर्वपुरुषार्थभागी, ज्ञात्वा कर्मानुष्ठानशीलः पुरुषः **इह** संसारमार्गे, मृत्युलोके वा; **नायाति** पुनरागतो न भवति । तर्हि कुत्र गच्छतीति चेत्, **परात्मा** परे भगवति आत्मा मनो यस्य सः परात्मा भूत्वेत्यर्थः । 'पृ पालन-पूरणयो'रिति धातोः सर्वजगत्पालनादिकर्तारं **परं** श्रीनारायणं **मार्गेण** अर्चिरादिमार्गेण **प्रयाति** गतो भवति । यद्वा **परं** वैकुण्ठादिस्थानं वा प्रयाति । **मार्गान्** मृग्यन्ते, अन्विष्यन्ते जनैरिति मार्गा विषयाः, तान् मार्गशब्दवाच्यान् विषयान् । 'मृग अन्वेषण' इति धातुः । **निहन्ति** नाशयति चेति । 'हन हिंसागत्योः' इति धातुः ।। १९ ।।

धृतराष्ट्र उवाच—

**कोऽसौ नियुङ्क्ते तमजं पुराणं**
**स चेदिदं सर्वमनुक्रमेत ।**
**किं वास्य कार्यमथवा सुखं च**
**तन्मे विद्वन्ब्रूहि सर्वं यथावत् ।।**

**वादिराजीयम्**– एवं सनत्सुजातोपदेशेन सर्वेषां वेदवाक्यानां ज्ञात-भगवद्विषयज्ञानो धृतराष्ट्रः 'परं प्रयाति' इति श्रुत 'पर' शब्दवाच्य-वस्तुस्वरूपं ज्ञातुकामः पृच्छति– **क इति । हे विद्वन्** सर्वज्ञ, सनत्सुजात! **अजं** जननरहितं पुराण मनादिकालीनं (तं) जीवं **नियुङ्क्ते** नियोजयति, यः प्रेरयति **असौ** पुरुषः कः को वा भवितुमर्हति, किं लक्षणक इत्यर्थः । **सः** जीवनियामको विष्णुः **इदं सर्वं जगत् अनुक्रमेत** सर्जनादिप्रवृत्या संसारयतीति **चेत् अस्य** विष्णोः **किं वा कार्यं** सृष्ट्यादिकरणेन किं वा साध्यं, प्रयोजनं? । भगवान्किं प्रयोजनमुद्दिश्य सर्जनादिकं करोतीत्यभिप्रायः । **किंवा सुखं** ? सर्जनादिनाऽस्य सुखं वा किं भवति ? निष्प्रयोजनः करोतीति चेत् ''प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'' इत्यनेन सप्रयोजन इव भातीत्यतः तत्सर्वं मदीयप्रश्नजातं यथावत् याथार्थ्येन ब्रूहि ।

***सनत्सुजात उवाच—**

**[१]अयं महानत्र बिभेद योगै-**
**रनादियोगेन भवन्ति नित्याः ।**
**तथास्य नाधिक्यमुपैति किञ्चि-**
**दनादियोगेन भवन्ति पुंसः ।।**

---

१. दोषो महानत्र विभेदयोगे ह्यनादियोगेन भवन्ति नित्याः । इति पाठान्तरम् ।

* इत आरभ्य वादिराजीये द्वितीयोऽध्यायोत्रारब्धः इति पूर्वमुद्रिते वर्तते । परं अष्टत्रिंशच्छ्लोके एवं गदितं वादिराजश्रीमच्चरणैः– ''सर्वज्ञः सनत्सुजातः प्रमादं वैमृत्युमहं ब्रवीमि इत्यारभ्य यावदध्यायान्तमिति । तेन ज्ञायते नात्र द्वितीयाध्यायरम्भ इति । परं वादिराजीयकोशे केचनाधिकाः श्लोकाः सन्ति । तेच श्लोकाः निरङ्काः मुद्रिताः ।

**वादिराजीयम्–** एवं धृतराष्ट्रेण पृष्टः सनत्सुजातः ''देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा'' ''न प्रयोजनत्वात् लोकवत्तु लीला-कैवल्यं'' ''बालक्रीडनकैरिव'' इत्यादिश्रुतिसूत्रस्मृतिषूक्तप्रमाणसिद्धानादि-तोऽवाप्तसकलकामस्य विष्णोर्जगत्सर्जनादिना स्वात्मनः प्राप्तव्यप्रयोजना-भावेऽपि अनादिसिद्धानाम् आदिमध्यान्तशून्यानाम् अस्वतन्त्राणाम् अनन्तानाम् अनेकविधभेदभिन्नानां सात्त्विकादिजीवानां तादात्म्यविशिष्टा-नादिकालीनतत्तद्योग्यताव्यक्तिद्वारा शुभाशुभफलप्रापणेन सर्वोपकारकत्वा-ज्जगज्जन्मादिकर्तृत्वं युक्तमित्युपदिशन्, तच्छङ्कामपनुदति– **अयमिति । अत्र** जगति **महान्** सर्वपूज्यः, 'मह पूजायामि'ति धातुः। **अयं** परमात्मा ''योगः सन्नहनोपाय'' इत्यभिधानात् **योगैः** स्वलीलाख्योपायैः, जीवानिति शेषः, **बिभेद** देवादिभेदेन उत्पादयामास ।

नन्वनादिनित्यानां जीवानां कथमीश्वरादुत्पत्तिरित्याशङ्कायां ''यावल्लिङ्गा-न्वितो ह्यात्मा तावत्कर्मनिबन्धनं'' ''जीवो नित्यो धातुरस्य त्वनित्यः'' इत्यादावुक्तरीत्या जीवानां स्वरूपतो नित्यत्वेऽपि अनादिसिद्धलिङ्गसम्बन्धेन अन्तरा प्राप्तजननादिधर्मविशिष्टस्थूलदेहस्य ''यतो वा इमानि भूतानि जायन्ते'' इत्यादिना भगवज्जन्यत्वश्रवणात् उक्तं युक्तमेवेति वदन् तच्छङ्का-मुन्मूलयति– **अनादीति । अनादियोगेन** अनादिप्राप्तलिङ्गसम्बन्धनिमित्तेन **नित्याः** स्वरूपविवक्षया नित्या अपि जीवाः **भवन्ति** ईश्वरादेवोत्पद्यन्ते । नन्वेवंविधानामनेकेषां जीवानां मध्ये चेतनत्वसाम्याद्येन केनापि पुरुषेण विष्णोः साम्याधिक्ये प्राप्ये नवा ? इत्याशङ्कायां ''न ते विष्णो जायमानो न जातो देवमहिम्नः परमंतमाप'' ''साम्यं न चास्य परमेण च केन चाप्यं'' ''न विष्णोः सदृशः कश्चित् भूतो वा भविताऽपि वा'' इत्याद्यनेकश्रुति-स्मृत्युक्तप्रमाणबलात्केनापि विष्णोराधिक्यं साम्यं वा नाप्यते इत्याह– **तथेति ।**

तथा इत्यव्ययम् । अव्ययानामनेकार्थत्वनियमादत्र तथाशब्द-बलात्साम्यमित्यनुसन्धीयते । **तथापि** जीवेश्वरयोश्चेतनत्वसाम्ये विद्यमानेऽपि **अस्य** विष्णोः **किञ्चित्** यत्किञ्चिदपि आधिक्यं साम्यमाधिक्यं च **नोपैति** न प्राप्नोति । नन्वीश्वरस्य साम्याधिक्यराहित्येन सर्वोत्तमत्वमथापि जीवेशयो-र्नियम्यनियामकभावः कुत इति चेत्, 'रूपं रूपं प्रतिरूपो बभूव'' ''द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते'' इत्यादिश्रुत्युक्त-जीवेश्वरयोरनादित एव बिम्बप्रतिबिम्बभावस्य सिद्धत्वात्पराधीनसत्तावतो जीवस्येश्वरेण नियम्यत्वं स्वाधीनसत्तासम्पन्नबिम्बभूतेश्वरस्य नियामकत्वं च सिद्धमित्याह– **अनादियोगेनेति । पुंसः** पूर्णषाड्गुण्यस्य विष्णोः **अनादियोगेन** अनादिसिद्धबिम्बरूपेश्वरसम्बन्धेन **भवन्ति** अनादित एव तदधीनसत्ताकाः प्रतिबिम्बा भवन्ति, सर्वे जीवा इति शेषः । अनेन समाधि-कराहित्येन चाप्तसमस्तकामस्य विष्णोः जगत्सर्जनादिना स्वप्रयोजनाभावेऽपि स्वाधीनानन्तजीवानां स्वस्वयोग्यताभिव्यक्तिद्वारा चिदचिदात्मकमुक्तितम-आदिप्रापणेन स्वाभाविकपरोपकर्तृत्वं सिद्धमित्युक्तं भवतीति समस्त-श्लोकाभिप्रायः ।

अस्मिन्नेव पूर्वार्धश्लोके ''दोषो महानत्र विभेद योगे ह्यनादियोगेन भवन्ति नित्याः'' इति पाठान्तरस्यायमर्थः । **अत्र** भूतभविष्यद्वर्तमानभेदेन त्रित्व-सङ्ख्याविशिष्टे काले **अनादियोगेन** भगवतः अनादिकालेन स्वाभिन्नेच्छा-निमित्तेन हिशब्दसूचिताः प्रत्येकशोऽनादिनित्याः अनन्तावताराः **भवन्ति** वर्तन्ते । एवंविधानामनन्तानां भगवदवताराणां **विभेदयोगे** परस्परं भेदसम्बन्धेऽङ्गीक्रियमाणे सति **महान्** अनिवर्तकतमःप्रापकत्वाच्छ्रेष्टः **दोषः** मिथ्याज्ञानाख्यः सम्भवतीति ।।

[1]यदेतदाह भगवान्स नित्यं
विकारयोगेन करोति विश्वम् ।
तथा च तच्छक्तिरिति स्म मन्ये
तथार्थयोगे च भवन्ति वेदाः ।।

**वादिराजीयम्–** सर्वज्ञः सनत्सुजातः एवं प्रथमश्लोके निरपेक्षेणैव जगज्जन्मादिकर्तृत्वं परब्रह्मणो अभिधाय द्वितीयश्लोके अनेकश्रुतिस्मृत्युक्त-प्रमाणप्रमितानन्यसाध्यप्रकृतिविकारात्मकप्रवाहतोऽनादिनित्यसत्यजग-त्सर्जनकथनव्याजेन तत्कर्तृत्वमेव विशेषतो विवृणोति– **यदिति । सः** नित्यानन्दो भगवान् **नित्यं** प्रवाहतोऽनादिनित्यं **यत्** प्रत्यक्षादिसिद्धं **विश्वं** जगत्; ''विश्वं सत्यं मघवाना'' इत्यादिप्रमाणसिद्धसत्यभूतं जगत् इत्यर्थः । **विकारयोगेन** विकाराणां गुणत्रयमहदहङ्कारतन्मात्राणां पञ्चभूतानां, योगेन पञ्चीकरणाख्योपायेन **करोति** निर्मिमीते । **एतत्** इत्येतत्प्रमेयं **भगवान्** सर्वपूज्यो वेदः **आह** ''तत्सृष्ट्वा'' इत्यादिस्ववाक्यैराह । नन्वस्त्वनेकवेद-वाक्यैर्जगज्जन्मादिकर्तृत्वं ब्रह्मण एवेति मतम् । तवापि ऋषित्वेन सर्वज्ञ-त्वादत्र त्वत्सम्मतिः कीदृशीत्याकाङ्क्षायामाह– **तथेति** । 'मन्ये' इत्युत्तम-पुरुषक्रियाबलादहमिति कर्ता लभ्यते । अत्र **चे**त्यपिः । अहं च सनत्सुजाताख्य अहमपि **तथा** श्रुत्याद्युक्तसम्मत्यनुसारेणैव **तच्छक्तिरिति** तादात्म्यविशिष्टस्य भगवतः शक्तिः जगज्जन्मादि करोतीति **मन्ये** जाने । शक्तिशक्तिमतोस्तादात्म्याभिप्रायेण 'तच्छक्ति'रित्युक्तिः । स एव करोतीत्यहं जानामीत्यर्थः । स्वमतेरपि वेदप्रामाण्यानुगुणत्वज्ञापनाय पुनरपि तत्सम्मतिमाह– **तथेति । वेदाः** 'परास्य शक्तिर्विविधैव श्रूयते'' ''स्वाभाविकी ज्ञानबलक्रिया च'' इत्यदयो वेदाः **तथार्थयोगेच** जगतो

[1]. य एतद्वा भगवान् स नित्य इति पाठान्तरम् ।

मत्सम्मत्यनुसारिभगवच्छक्तिजन्यत्वाद्युक्तार्थसम्बन्धयोगे **भवन्ति** सम्मताः भवन्तीति । अतो वेदोक्तिमत्सम्मत्योरेकवाक्यतैवेति ॥

धृतराष्ट्र उवाच—

**यस्माद्धर्मानाचरन्तीह लोके[१]**
**तथाऽधर्मान्केचिदिहाचरन्ति ।**
**धर्मः पापेन प्रतिहन्यते वा**
**उताहो धर्मः प्रतिहन्ति पापम् ॥**

**वादिराजीयम्–** एवं सकलशास्त्रार्थसम्मत्योक्तज्ञातभगवत्सम्बन्धि-जगज्जन्मादिकर्तृत्वनियमो धृतराष्ट्रस्तदानीं श्रुतिविहितानां निष्कामसकामभेदेन द्विविधानां पुण्यकर्मणां मध्ये, किम् अकाम्यकर्मण एवानिवर्तकत्वेनावश्य-मनुष्ठेयत्वमाहोस्वित्सकामकर्मणामिति कर्मस्वरूपं ज्ञातुकामः पृच्छति– **यस्मादिति । इह लोके** मनुष्यलोके **केचित्** अपरोक्षज्ञानासम्पन्नाः अधिकारिणः **धर्मान्** निवृत्तिधर्मान् **आचरन्ति** निष्कामनया विष्णुप्रीत्यर्थ-माचरन्ति इति प्रसिद्धिः । **तथा** प्रारब्धवशात्त एव **अधर्मान्** अगम्यागमना-दीनप्याचरन्ति । एवं सति धर्मः पूर्वाचरितो निवृत्ताख्यो धर्मः **पापेन** आनन्तर्येण कृतागम्यागमनादिरूपेण पापेन प्रतिहन्यते **वा** विनश्यते किं **उत धर्मः** स एव पूर्वाचरितो निवृत्तिरूपो धर्मः स्वयमविनाशी सत् **पापं** तमेव पापं **प्रतिहन्ति** विनाशयति । किमिति । यद्वा अत्र 'केचिदि'त्युक्त्या गृहाश्रमिण एव ग्राह्याः । **यस्मात्** श्रुतिविहितत्वादिति हेतोः **इहलोके** मनुष्यलोके **केचित्** मध्यमाधिकारिणो गृहाश्रमिणः पुरुषाः **धर्मान्** "प्रातःसन्ध्यामुपासीत" इत्यादिश्रुतिविहितान् आचरन्ति । **धर्मः** स्वानुष्ठितः

---

१. केचित् इति पाठान्तरम् ।

सन्ध्यावन्दनादिरूपः अकामो धर्मः **पापेन** प्रतिग्रहादिपापेन **प्रतिहन्यते किं** विनश्यते किं **उतधर्मः** सन्ध्यावन्दनादिरूपः **पापं** प्रतिग्रहादिरूपं **धर्मं प्रतिहन्ति किं** विनाशयति किम् । एवमाचरितसकामपुण्यपापयोः विरुद्धत्वादन्यतरेणान्यतरस्य नाशोऽस्तिवा नवेति प्रश्नाभिप्रायः ।।

**सनत्सुजात उवाच—**

**तस्मिन्स्थितो[१] वाप्युभयं हि नित्यं**
**ज्ञानेन विद्वान्प्रतिहन्ति सिद्धिम्[२] ।**
**अतोऽन्यथा[३] पुण्यमुपैति देही**
**तथागतं पापमुपैति सिद्धिम्[४] ।।**

**वादिराजीयम्–** एवं धृतराष्ट्रेण पृष्टः सनत्सुजातः ज्ञान्यज्ञान्याचरित-पुण्यपापयोः अधिकारिभेदात्तत्तदधिकार्यनुसारित्वमेवास्तीति ज्ञापनाय उभयविधाधिकारिप्रवृत्तिमाह— **तस्मिन्निति । तस्मिन्** परमात्मनि **नित्यम्** एकप्रकारेण **स्थितः** तदेकनिष्टो **विद्वान्** अपरोक्षज्ञानी **उभयं** सञ्चितागामि-पुण्यं पापं चेत्युभयं **प्रतिहन्ति** ''तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'' ''तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्'' इति प्रमाणानुसारेण **प्रतिहन्ति** निर्मूलयतीत्यर्थः । **सिद्धिं हि** नश्वरपुण्यपाप-जनितस्वर्गनरकादिगमनाख्यसिद्धिं च **प्रतिहन्ति** तदपि नाशयतीत्यर्थः । तदनन्तरं सर्वेषां पुण्यकर्मणां भगवत्प्रीतिसाधनानुष्ठेयत्वमिति भगवद्भक्ति-सम्पन्नापरोक्षज्ञानिप्रवृत्तिः । **अतः अन्यथा** वैपरीत्येन धर्माचरणशीलः **देही** अपक्वयोगी पुरुषः **तथागतं** फलाभिसन्धानाचरणागतं प्राप्तं फलानुभवाभावे कदाप्यविनाशि **पुण्यं** ''नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि'' इत्यादिना

१. **स्थितौ** इति पाठान्तरम् । २,४. **सिद्धमिति** पाठान्तरम् ।
३. तथाऽन्यथा इति पाठान्तरम् ।

काम्यकर्मस्वरूपकथनात् । **सिद्धिश्च** तज्जनितस्वर्गादिफलसिद्धिं च **उपैति** प्राप्नोति । 'तथागतं' इत्युभयत्रान्वेतव्यम् । **तथागतम्** अपक्वदशायां प्राप्तं **पापं सिद्धिं च** तज्जनितनरकादिसिद्धिं च उपैति । अनेन पक्वस्यापरोक्षज्ञानिनः आगामिसञ्चितसंज्ञानां पुण्यदिकर्मणां अपरोक्षोत्तरकाल एव स्वरूपतो विनाशसम्भवात्तज्जनितोभयविधफलाभावः । अपक्वयोगिनस्तु तदभावादुभयविधफलप्राप्तिरिति प्रश्नपरिहार इति ।

अस्मिन् श्लोके पूर्वोत्तरार्धयोः "सिद्धं" इति पाठे अस्मदुक्तराद्धान्तस्य श्रुत्यादिषु सिद्धमिति हेतोर्न शङ्कावसर इत्यर्थः इति ।।

**स्थित्वोभयं कर्मणि भुञ्जते स्थिरं[1]**
**शुभस्य पापस्य स चापि कर्मणः ।**
**धर्मेण पापं प्रणुदतीह विद्वान्**
**धर्मो बलीयानिति तस्य[2] विद्धि ।।**

**वादिराजीयम्**– इदानीमपरोक्षदशाविशिष्टज्ञान्यज्ञान्याचरित- पुण्यपापाख्यकर्मणः स्वोत्थनश्वरफलप्रापकत्वाप्रापकत्वं वर्णयति– **स्थित्वेति** । "इष्टापूर्तं मन्यमाना वरिष्टं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः" "त्रैविद्या मां सोपमाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते" "ज्योतिष्टोमेन स्वर्गकामः" "अन्नदानादेते लोकाः" इत्यादिश्रुतिषूक्तफलानुरागेण **कर्मणि** काम्यकर्मणि । स्थिरमिति क्रियाविशेषणम् । **स्थिरं** यथा भवति तथा स्थित्वा तदनुष्ठानायेति शेषः। **सः** काम्यकर्मानुष्ठानशीलः पुरुषः **शुभस्य** नश्वरकाम्यसुकृतस्य तथा **पापस्य कर्मण** इत्युभयत्रान्वेतव्यम् । नरकापादकनश्वरपापस्य **चापि उभयं**

---

१. गत्वोभयं कर्मणा युज्यते स्थिरम् इति पाठान्तरम् । २. तत्रेति पाठान्तरम् ।

स्वर्गं नरकं चेत्युभयविधमपि फलं **भुङ्क्ते** साकल्येनानुभूयते । **विद्वान्** "धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायेह कल्पते" "नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः" "वासुदेवपरा मखाः" "मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः" "काम्यानां कर्मणां न्यासं" इत्यादिबहुप्रमाणेषु काम्यकर्मणां न्यासश्रवणात् "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" इत्यादिषु तेषां कर्तुमावश्यकत्वे श्रवणात् श्रुत्युक्तानां सर्वेषां कर्मणां विष्ण्वर्पणाख्यक्रियया सार्थक्यमस्तीति ज्ञात्वानुष्ठानवानपरोक्षज्ञानी, **धर्मेण** स्वानुष्ठितविहितधर्मेण पूर्वार्जितं **पापं प्रणुदति** विनाशयति । (इह) **तस्य** ज्ञात्वानुष्ठानवतो ज्ञानिनः धर्मः विष्ण्वर्पणरूपो धर्मः बलीयान् पापनाशनशक्तिमान् (इति) **विद्धि** जानीहि । 'विद्धी'त्यनेन किमपि कुर्वित्याशयः । अनेन फलानुसाधनेन काम्य-कर्मानुष्ठायिनामज्ञानां स्वाचरितपुण्यपापयोर्भोगनियमः । तेषामेव कर्मणां विष्ण्वर्पणबुद्ध्या क्रियमाणानां ज्ञानिनां बलिष्ठपुण्यसम्बन्धेन अनिष्टापादककर्मणां नाश इत्यर्थो दर्शित इति ।।

**सनत्सुजात उवाच–**

**येषां व्रतेऽथ[१] विस्पर्धा बले बलवतामिव ।**
**ते ब्राह्मणा इतः प्रेत्य [२]ब्रह्मलोकप्रकाशकाः ।। २२ ।।***

**वादिराजीयम्–** इदानीं पूर्वश्लोकोक्तज्ञान्यज्ञान्याचरितस्यैकस्यैवं पुण्यकर्मणः स्वर्गमोक्षप्रदत्वमुक्त्वोत्तरश्लोकैर्विवृण्वन्नादौ सकामकर्मिणां स्वर्गादिप्राप्तिप्रकारमाह– **येषामिति** । **येषां** विषयरागिणां पुंसां **धर्मेषु**

१. धर्मेषु इति पाठान्तरम् । २. स्वर्गे यान्ति प्रकाशतामिति पाठान्तरम् ।
* अत्र श्लोकसङ्ख्याः सत्यधर्मीयपाठादृताः वर्तन्ते ।

प्रवृत्तिधर्मेषु **विस्पर्धा** पुण्याधिक्यात्स्वर्गे फलाधिक्यमिति श्रुत्वा स्वर्गसुखार्थं पुण्यानुष्ठायिनोऽन्यान् पुण्यवतो जनान् दृष्ट्वाऽहमस्मादप्यधिकपुण्याचरणेनामुत्राधिकं सुखी स्यामिति स्पर्धा, येषामस्तीति शेषः । तत्र दृष्टान्तमाह– **बले बलवतामिवेति** । यथा **बलवतो** राज्ञः स्वापेक्षयाऽधिकबलिनं राजानं दृष्ट्वा अमहस्मादपि बलवन्तं सम्पाद्यैनं जित्वाऽधिकं सुखी भूयासमिति यथा दुर्बलस्य राज्ञः सङ्घर्षो वर्तते, तथा काम्यकर्मानुष्ठायिनामपि स्पर्धा । **ते ब्राह्मणाः** काम्यकर्माचरणशीलाः, त एव ब्राह्मणाः **इतः** भूलोकात् **प्रेत्य** मृताः सन्तः **स्वर्गे** स्वर्गाख्ये लोके **प्रकाशतां** ऐश्वर्यादिना अतीव प्रकाशतां **यान्ति** स्पर्धयाऽऽचरितसुखाधिक्येन स्वर्लोके सुखाधिक्येनाधिकं प्रकाशन्त इत्यर्थः ।। ६ ।।

**सत्यधर्मीयम्–** राजन्नेतत्प्राप्याः शाश्वतिका लोका इति यतोऽतो ज्ञानसम्पादन एवेति वदति– **येषामिति** । **येषां** कर्मिणां **व्रते** प्रवृत्ते यज्ञादौ **विस्पर्धा** तदपेक्षयाऽधिकं कर्मानुष्ठाय तदधिकसुखी स्यां परत्रेति सङ्घर्षः । **बलवतां** साधारणबलिनां **बले** स्वके स्पर्धा तदपेक्षयाऽहं बली भूत्वा तद्राज्यं गृह्णामीति यथा तथा स्पर्धावन्तो ब्राह्मणाः । इतः प्रेत्य **ब्रह्मलोकप्रकाशकाः** तत्र दीप्यमानाः यावत्संपातं वसन्ति । स च लोकः स्वर्गोवा सत्यादिर्वा क्षयिष्णुत्वसाम्यात् । तन्नित्यताप्रतिपादकवेदवादस्तु किंचिच्चिरताप्रयुक्त इति भाक्त इति भावः ।। २२ ।।

**येषां धर्मे न च स्पर्धा तेषां तु ज्ञानसाधनम् ।**
**ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपम् ।।**

**वादिराजीयम्–** एवं स्वर्गादिसुखारागिणां पुरुषाणां ''स्वर्गकामो यजेत'' इत्यादिश्रुत्युक्तबाह्यानुसन्धानसम्पन्नबहिर्मुखजनानुष्ठितानित्य सुकृतजनितकालावधिकस्वर्गादिलोकप्राप्तिमभिधायेदानीं भगवदेकनिष्ठविरक्तज्ञानिपुरुषानुष्ठित

'यजेते'त्यादिवाक्यविहितज्योतिष्टोमादियागाद्यनुष्ठानप्राप्तस्वर्गादिशब्द-वाच्यवैकुण्ठादिलोकप्राप्तिप्रकारमाह – **येषामिति** । **येषां** ज्ञानिनां **धर्मे** सकामधर्माचरणे हेयत्वेन सर्वथापरित्यागरूपा स्पर्धा **नच** नास्ति, फलाशां विहाय स्वात्मनो विधिनिषेधविषयत्वेन तदाचरणस्य विहितत्वाद्विष्णु-प्रीत्यर्थमेवाचरिष्ये इत्याचरणं 'कर्मणामस्पर्धे'त्युच्यते । एवं शीलं येषामस्ति **तेषां** तथाविधज्ञानिनां ज्ञानसाधनं, भवतीति शेषः । **ते** एवमाचरणशीलाः ते **ब्राह्मणाः** ब्रह्मजिज्ञासाशीलाः, 'अण् चेष्टाया'मिति धातुः । **इतः** अस्माल्लोकात्, लिङ्गाद्वा मुक्ताः भूत्वेति शेषः । **त्रिविष्टपं** त्रीणि विष्टपानि श्वेतद्वीपानन्तासनवैकुण्ठाख्यानि स्थानानि यस्यासौ त्रिविष्टपस्तं स्वर्गं ''परः स्वो हरिरुद्दामः'' इत्यभिधानात् स्वश्चासौ गश्चेति स्वर्गो विष्णुः, 'गम्लृगता'विति धातुः, तं यान्ति वैकुण्ठादिधामत्रयगतं विष्णुमेव यान्तीत्यर्थः ।। ७ ।।

**तस्य सम्यक् समाचारमाहुर्वेदविदो जनाः ।**
**नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनः ।।**

**वादिराजीयम्–** ज्ञात्वानुष्ठानशीलज्ञान्याचरणस्यैव श्रेष्ठत्वज्ञापनायात्र शिष्टसंमतिरप्यस्तीत्याह– **तस्येति** । **वेदविदः** ''वेदो नारायणः साक्षात्'' इत्यनेन वेदो विष्णुस्तं जानन्तीति वेदविदः; यद्वा 'सर्वे वेदा यत्पद-मामनन्ति' इत्यनेन ज्ञानमयपरतत्वप्रतिपादकानां सर्वेषां वेदवाक्यानां भगवत्परत्वज्ञानसम्पन्नाः इति वा; **जनाः** ज्ञानिजनाः **तस्य** निष्कामनया विष्णुप्रीत्यर्थमिति सर्वधर्माचरणशीलस्य विदुषः **आचारं** विष्ण्वर्पणरूपमाचारं सं समीचीनमिति **सम्यक् आहुः** । ये ज्ञानिनस्ते सर्वेषां कर्मणां ज्ञात्वाऽ-नुष्ठानमेव सम्यगित्याहुरित्यर्थः । इदानीमेवंविधज्ञानिनां स्वरूपमज्ञानिभिर्न ज्ञायत इत्याह — **नेति** । **जनः** विषयरागिजनः **एनं** ज्ञात्वा

कर्मानुष्ठानशीलिनं **बाह्यम्** अनपरोक्षिणम्, **आन्तरम्** अपरोक्षिणं च **भूयिष्ठं** 'भू पूर्णतायामि'ति धातोः, 'येति ज्ञानं समुद्दिष्ट'मिति वचनाच्च, भूश्चासौ यश्चेति भूयो विष्णुस्तस्मिन् 'ष्ठा गतिनिवृत्ता'विति धातोः अचाञ्चल्येन तिष्ठतीति भूयिष्ठस्तं, भगवदेकनिष्ठमित्यर्यः, **न मन्येत** न जानातीति । अनेन अपरोक्षानपरोक्षभेदेनोभयविधज्ञानिस्वरूपं, तेषां प्रवृत्तिश्च अज्ञजनैर्न ज्ञायत इत्यभिप्रायः । यद्वा **बाह्यं** काम्यस्वरूपम् **आन्तरं** निष्कामस्वरूपम् **एनं** विष्णुप्रीतिसाधनं द्विविधं धर्मं **जनः** बहिर्मुखजनः **न मन्येत** मोक्षापादकत्वेन अयमेव महान्धर्म इति न जानाति । अनेन विषयरागिणां बहिर्मुखानां जनानां भागवतधर्मे भूयस्त्वं नास्तीत्यर्थः ।। ८ ।।

**यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोलपम्[1] ।**
**अन्नं पानं[2] ब्राह्मणस्य तज्जीवन्नानुसंज्वरेत् ।। २३ ।।**

**वादिराजीयम्–** ननु प्राकृतैरज्ञानिभिर्ज्ञानिनां स्वरूपं नज्ञायते चेत्, तर्हि केषां स्वरूपज्ञानमित्याशङ्कायां ज्ञानिनामेव ज्ञानिस्वरूपज्ञानं, नेतरेषा-मित्यर्थः – **यत्रेति । यत्र** यस्मिन्ज्ञानिनि दृष्टे सति ज्ञान्येव पुरुषः **भूयिष्ठं** महान्तमिति **मन्येत** मया दृष्टोऽसौ ज्ञानी महानिति जानाति । तत्र दृष्टान्तमाह – **प्रावृषीति । प्रावृषि** वर्षाकाले **तृणोदकमिव** वर्षाकाले तृणस्थोदकस्य भूयस्त्वं यथा प्रत्यक्षतो जनैर्ज्ञायते, तथा ज्ञानिनि दृष्टे सति ज्ञनिभिरेव तन्महत्वं प्रत्यक्षतो ज्ञायत इति । अयं दृष्टान्तः महत्वज्ञानविषय इति ज्ञातव्यम् । **तत्** तस्मात्, ज्ञानिनि महत्वमस्तीति हेतोः **जीवन्** गार्हस्थेन जीवमानः पुरुषः **ब्राह्मणस्य** ब्रह्मज्ञानसम्पन्नस्य तथाविधस्य ज्ञानिनः **अन्नं** सदन्नम् **उदकं** शुच्युदकं च दत्वा **नानुसञ्ज्वरेत्** अभितप्तो न भवतीत्यभिप्रायः । सांसारिकतापत्रयाभितप्तो न भवेत्, ''महत्सेवां

१. तृणोदकम् इति पाठान्तरम् । २. अन्नोदकमिति पाठान्तरम् ।

द्वारमाहुर्विमुक्तेः'' ''सत्सङ्गमो तदैव सद्गतौ'' इत्यादिना महत्सेवायाः महाफलप्रापकत्वश्रवणात् । अनेन संसारिणां महत्सेवैव सर्वानिष्टनिवर्तिनीत्यसूचि ।। ९ ।।

**सत्यधर्मीयम्–** एधमानमेकं दृष्ट्वाऽन्यः सन्तापं न भजेतेति वदन्नर्थात्स्पर्धां प्रतिषेधति – **यत्रेति । प्रावृषि** वर्षाकाले **तृणोलपं** तृणेन सहितमुलपं गुल्मानि तत् । उलपस्तृणभेदे स्याद्गुल्मिन्यमुलपं स्मृतमिति विश्वः । तृणोदकमिति स्फुटार्थः पाठः । केचित्तु तृणोलपमिति ख्यातो मुनिभोजनेषु वदतीति वदन्ति । लताप्रतानिनी वीरुद्गुल्मिन्युलप इत्यपीत्यमराल्लतागृहमित्यर्थः । **भूयिष्ठं** अतिमहदिति तदुपजीवी जनो मन्यते । तथा यत्र देशे जनसमूहे वा यदन्नं पानं वा दैवप्राप्तं तदेव **जीवन्** उपजीवन्पुमान् । यत्रान्यस्मिन् तदन्नपानं भूयिष्ठं स्वतोऽप्यतिशयितमिति । **नानुसंज्वरेत्** नोपतपेत् ।। २३ ।।

**यत्राकथयमानस्य प्रयच्छत्यशुभं[1] भयम् ।**
**अतिरिक्तमिवाकुर्वन्स श्रेयान्नेतरो जनः ।। २४ ।।**

**वादिराजीयम्–** महाफलप्राप्तये सर्वसाधनानां महत्सेवाया एव प्रथमसाधनत्वात्स्वविहिते मार्गे पुरुषेण ''ऊर्ध्वं प्राणा उत्क्रामन्ति'' ''यूनः स्थविर आयते'' ''अभ्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते'' ''दृष्टिं दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् । उत्थाय चासनं दद्यादेष धर्मः सनातनः'' इत्यादि प्रमाणानुसारेण महत्सेवैव कार्या, न चेत्स्वात्मन एव महानर्थप्राप्तिरित्युपदिशति– **यत्रेति ।**

**यत्र** यस्मिन्ज्ञानिनि दृष्टे सति **अकथयमानस्य** तेन सह भक्त्या

१. प्रयच्छत्यशिवमिति पाठान्तरम् ।

कुशलप्रश्नादिना सम्भाषणादिसेवामकुर्वाणस्य पुंसः **अशिवं** आल्पायुष्यादि-प्रदानादिना मरणादिरूपममङ्गलं **भयं** पारत्रिकनरकभयं च प्रयच्छन्ति देवा इति शेषः । ननु यस्मिन्ज्ञानिनि दृष्टमात्र एव सत्कारमकुर्वतो महानर्थप्राप्तिः, स ज्ञानी किं लक्षणकः ? इत्याशङ्कायां तल्लक्षणान्याह– **अतिरिक्तमिति ।** यः ज्ञानी आत्मानम् **अतिरिक्तं** परकृतावमानादिनोत्थकोपाद्यभिव्यक्ति-करणेनातिशयितं अकुर्वन्नेवास्ते इति शेषः, सः **स एव** ज्ञानी **श्रेयान्** पुण्याधिक्यवान् श्रेष्ठतम इत्यर्थः । **इतरः** मानापमानजनितसुखदुःखादि-नोत्थरागद्वेषशीलः **जनः न** श्रेयान् । अनेन–

य एकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं चिन्तयीतोभयोस्तयोः ।।

इति प्रमाणोक्तार्थानुसारिप्रवृत्तिमानेवापरोक्षज्ञानी, नान्य इति ज्ञानिनो लक्षणमित्यभिहितम् ।। १० ।।

**सत्यधर्मीयम्–** ज्ञानवतोऽयं महोपकारकृदसत्कुर्वाण इत्यावेदयति– **यत्रेति । यत्र** देशे जनसमूहेवा **अकथयमानस्य** स्वस्वरूपमवदतः ज्ञानयोग्यं किञ्चिदनभिदधतोऽपि **अशुभम्** अमङ्गलं प्रयच्छति । उच्छिष्ट-पानीयादिकमानीय दिशति । तथा **भयं** पाषाणादिभ्यः । **अतिरिक्तं** लोकेतरप्रज्ञत्वेनोत्कृष्टं **अकुर्वन्** भर्त्सनाप्रणिपातादिकं कुर्वाणः । **जनः श्रेयान्** तद्धितकृदुत्तमः । **इतरः** सन्मानकर्ता न श्रेयानित्यन्वयः । उक्तं च– जनेनावमतो योगी योगसिद्धिं च विन्दतीति । मनुरपि– सन्माना-द्ब्राह्मणो नित्यमुद्विजेत विषादिवेति । पराशरोऽपि– न सन्मानात्पराहा-निर्जात्या वै विदुषे जन इति । जनासभाजनेन स एधत इति स श्रेयस्कर इति भावः । असन्मानात्तपोवृद्धिः सन्मानात्तु तपःक्षय इति च ।। २४ ।।

**यो वाऽकथयमानस्य ह्यात्मानं नानुसंज्वरेत् ।**
**ब्रह्मस्वं नोपहन्याद्वा[1] तदन्नं संमतं सताम् ।। २५ ।।**

**वादिराजीयम्–** इतोऽपि ''जनेनावमतो योगी योगसिद्धिं स विन्दति । ''सन्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।। असन्मानात्तपोवृद्धिः सन्मानात्तपसः क्षयः'' इत्यादिप्रमाणोक्तानुसन्धानज्ञानसम्पन्नो अभिमानशून्य एव ज्ञानीति तल्लक्षणान्येवानुवदति **य इति । यः** विषयालम्बुद्धिसम्पन्नो ज्ञानी **अकथयमानस्य** अन्यैः सह माहात्म्यस्तवनादिना ख्यातिरूपेण अनाख्यायमानस्य स्वात्मनो विषय इति शेषः **नानुसञ्ज्वरेत्** खेदादिना स्वमनो न सन्तापयेत् । वा इति समुच्चये । **ब्रह्मस्वं** ब्रह्मणः परब्रह्मणः **स्वं** स्वकीयं सर्वस्वातन्त्र्यादिधर्मं च **नोपहन्यात्** न हिंस्यात् । अत्र ब्रह्मस्वहननं नाम ''अहं ब्रह्मास्मीति परब्रह्मणस्तादात्म्येन मिथ्योपासनैव ब्रह्मस्वहननमित्युच्यत इत्यर्थः । **तत्** तस्य विषयालम्बुद्धिविशिष्टब्रह्मज्ञानसम्पन्नस्य ज्ञानिनो **दत्तं** ''दानं ध्रुवं फलति पात्रगुणानुकूल्यात्'' इत्यर्थानुसन्धानेन दत्तं समर्पितम् अन्नादिद्रव्यं **सतां** ज्ञानिनां सम्मतं दातुर्महाफलापादकत्वेन सम्मतमिति । यद्वा, **तत्** तादृशब्रह्मज्ञानिना दत्तम् अन्नमुदकं वा **सतां** ज्ञानिनां सम्मतं ''पातके महति प्राप्ते प्रायश्चित्तविवर्जिते । याचयेद्वैष्णवस्यान्नं तदभावे जलं पिबेत्'' इत्युक्तत्वात् ज्ञानिदत्तान्नादिस्वीकारेण पातकिनां महापापनिवर्तकत्वेन संमतमिति वा ।। ११ ।।

**सत्यधर्मीयम्–** पृथक् पृथगुन्नीतनीतयः श्लोका इति न सङ्गतिविचारे मनः खेदनीयम् । यत्र साऽपि लब्धा तर्हि महांल्लाभ इति मन्तव्यम् । अकथयमानस्येति प्रस्तुते तद्विषये य इत्थंभूतस्तदोदनादने न दोष इति भाषते– **य इति । आत्मानं अकथयमानस्य** तद्विषय इति यावत् ।

१. नोपयुञ्जीत इति पाठान्तरम् ।

यद्वा कथयमानस्य सकाशात् । **आत्मानं न सञ्चरेत्** तप्तो भूयात् । तापयेद्वा । **ब्रह्मस्वं** ब्रह्मपदार्थः स एव चेत् "द्रव्यं च चैलाजिन-पुस्तकादिकम् । रत्नहेमादिकं नास्य योगिनः संप्रचक्षते । कुशवल्कल-चैलाद्यं ब्रह्मस्वं योगिनो विदुः" । इत्युक्तं ब्रह्मस्वं इतरब्राह्मणद्रव्यं चेद्धेमादि **नोपहन्यात्** नाशयेत् । तस्यान्नं सतां **अन्नं** अद्यत इति अद्य-मिति संमतम् । नोपयुञ्जीतेति पाठे उपभोगयोग्यं न कुर्यात् ।। २५ ।।

**यथास्वं वान्तमश्नाति श्वा वै नित्यमभूतये ।**
**एवं ते वान्तमश्नन्ति तस्य स्वमुपयुज्य वै ।। २६ ।।**

**सत्यधर्मीयम्–** योगिनां कुशादिकं चेदपि ग्रहस्थेन देयमिति तद्ग्रहणमेवमथवा स्वयं कस्यचिदुपजीवी सन्पुनर्ग्रहस्थ एव तमुपजीवितु-मिच्छन्नेवमिति शंसति– **यथेति** । यथा **श्वा** सारमेयः । स्वं वान्तं स्वयमेव नित्यं **अश्नाति** भुङ्क्ते तथा । **उपयुज्य** योगिनेव कलत्रादि-संयोगिनेव । उपयोगं कृत्वा पुनस्तदेवाश्नन्ति वान्तमश्नन्ति । तच्चोत्तरत्र **अभूतये** नैरैश्वर्यायात्र परत्रामङ्गलायच भवति । अतः प्राज्ञेन न तदाशा कर्तव्येति भावः । कटाक्ष इन्द्रप्रस्थादिहरणेन त्वं तथेत्यत्रेति ज्ञेयम् ।। २५ ।।

**नित्यमज्ञातचर्या म इति मन्येत [1]वै द्विजः ।**
**ज्ञातीनां तु वसन्मध्ये नैव विन्देत किश्चन ।। २७ ।।**

**वादिराजीयम्–** ज्ञानसहकारिणामेव श्रुतिस्मृत्युदितानां वर्णाश्रमधर्माणां मोक्षसाधनत्वं, नान्येषामिति ज्ञापनाय "गृहस्थोऽपि विमुच्यत" इत्यादि प्रमाणानुसारेण ज्ञानहीनसन्यासाद्याश्रमाद्यपेक्षया ज्ञानसम्पन्ननिवृत्तधर्मानुष्ठान-शीलग्रहस्थ एव श्रेयानिति तत्प्रवृत्तिमुपदिशति— **नित्यमिति** । **ब्राह्मणः**

१. ब्राह्मण इति पाठान्तरम् ।

ब्रह्मज्ञानी गृहस्थः **नित्यं** सर्वदा **मे** ज्ञानिनो मम **अज्ञातचर्या** महिमा-गूहनेनान्यापरिज्ञातचर्या अस्त्विति **मन्येत** जानीयात् । यद्वा **अज्ञातचर्या** अज्ञाते साकल्येन सर्वापरिज्ञाते विष्णौ चर्या प्रवृत्तिः नित्यं मे अस्त्विति वा मन्येत । एवंविधो ज्ञानी **ज्ञातीनां** पुत्रकलत्रादीनां मध्ये **वसन्नपि** गार्हस्थ्यधर्मेणैव वसन्नपि **किञ्चन** किञ्चिदपि पापादिकं **नैव विन्देत** नाप्नुयादेव । अनेन ज्ञानपूर्वककर्मानुष्ठानस्यैव मोक्षसाधनत्वं, नान्यस्येति निर्णय इति ।। १२ ।।

**सत्यधर्मीयम्–** द्विजः मे नित्यं **अज्ञातचर्या** गूढ आचारो मुक्ति-प्रदमिति । मन्येत आचरेच्च तथा । कुटुम्बनिकुरं त्वेव वसेच्चेत् किमित्यत आह– **ज्ञातीनां** पुत्रकलत्रादीनां मध्ये वसन् **किंचन** ऐहिकं सुखं पारत्रिकं वा **नैव विन्देत** न लभेत । अतः सनकादिवद्गूढचारी भवेद्योगी । तथा च श्रुतिः–

> कुटुम्बं पुत्रदारं च वेदाङ्गानि च सर्वशः ।
> यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिरिति ।

वसिष्ठोऽपि– यन्नसन्तं न चासन्तम् । जानन्नपि च मेधावी जडव-ल्लोक आचारेदिति । अथवा जनकादिवन्नित्यं अज्ञातचर्या ज्ञानी अज्ञातचर्या मे ममेति मन्येत । तथाऽऽचरेच्च । ज्ञातीनां मध्ये वसन्नपि नैव अवसन्नेव । **किंचन** तद्धिताहितं अभिमतिहतेः **नैव विन्देत** । नमे दह्यति किञ्चनेत्यादिवन्न हर्षामर्षौ सुखदुःखाभ्यां प्राप्नोतीत्यर्थः । **नित्यमैः** शाश्वतिकमतिभिर्ब्रह्मादिभिरेव **ज्ञातस्य** हरेश्चर्या **मे** ममास्तु ध्येयतया । इति **द्विजस्त्रैवर्णिकः** मन्येत । तुः लिङ्गभङ्गानन्तरमित्यादि-विशेषसूचकः । ज्ञातीनामित्युपलक्षणम् । अज्ञातीनां च मध्ये वसन् ज्ञातिभिर्वाऽज्ञातिभिर्वेत्यादेः **किञ्चन** अस्वरूपं अनिच्छया **नैव विन्देत** न प्राप्नुयादिति विवृण्वते । अतस्त्वमेवं भवेति भावः ।। २७ ।।

**कोह्येन[1] मन्तराऽऽत्मानं ब्राह्मणो [2]मन्तुमर्हति ।**
**निर्लिङ्गमचलं शुद्धं सर्वद्वन्द्वविवर्जितम् ।। २८ ।।**

**वादिराजीयम्–** ब्रह्मणो यद्यज्ञातता चोच्यते तर्हि शशविषाणवदनिर्वचनीयं च प्रसज्येतेति चेन्न ''यतो वाचो निवर्तन्ते'' ''न ते विष्णो जायमानो न जातो देवमहिम्नः परमं तमाप'' इत्यादिश्रुतिस्मृतिषु सर्वान्तर्यामित्वादिगुणविशिष्टस्य ब्रह्मणः साकल्येनाज्ञेयत्वमेवाज्ञातत्वमित्युच्यते, न तु सर्वथाऽज्ञानविषयत्वमित्यतो न शङ्कावसर इति ज्ञापनाय अस्मिन्श्लोके ब्रह्मणः सर्वापरिज्ञेयत्वादिलक्षणान्याह– **क इति** । **कः** ब्राह्मणः कोऽपि वा ज्ञानी पुरुषः **एनं** श्रुत्यादिषु अपरिज्ञेयमहिमावत्वेन प्रसिद्धम् **अन्तरात्मानं** सर्वान्तर्यामिणं **निर्लिङ्गं** अनादितो लिङ्गसम्बन्धशून्यं **अचलं** सर्वदैकप्रकारं **शुद्धं** निर्दुष्टं **सर्वद्वन्द्वविवर्जितं** शीतोष्णादिद्वन्द्वसम्बन्धजनितसुखदुखादिलेपहीनं एवंविधं भगवन्तम् **मन्तुं** साकल्येन ज्ञातुं **अर्हति** समर्थो भवति ? न कोऽपीत्यर्थः ।। १३ ।।

**सत्यधर्मीयम्–** एकान्तसेवितां विना न सङ्गसङ्ग एतद्धटत इत्याह– **कोहीति । ब्राह्मणः** ब्रह्माणनयोग्यः **एनं** स्वशरीरान्तर्गतं **आत्मानं** आदानादिकर्तारं हरिं **मन्तुं** ज्ञातुम् । **कोऽर्हति** न कोऽपि योग्यो भवति । **अन्तरा** सङ्गं विना स्थितश्चेन्मन्तुमर्हति । विविक्तसेवी लध्वाशीत्यादेः । कुतो दौर्घट्यं तज्ज्ञानस्येत्यतस्तत्स्वरूपं निरूपयति– **निर्लिङ्गं** प्रसादमन्तरेणानाविर्भावितस्वचिन्हं **अचलं** भिन्नक्रियाराहित्यात् । हृदयागुहातो बहिर्गच्छन्तमित्यचलं वा । **शुद्धं** दोषविधुरं **सर्वैर्द्वन्द्वैः** अशनायापिपासादिभिर्विवर्जितं तदतीतैरेव प्राप्यत इति सङ्ग एतद्भङ्गकर इति त्याज्य इति भावः । आत्मानं तमेव । अन्तरा तत्प्रसादेन विनेति यावदिति वा । **अन्तरात्मानं** साक्षिभूतमिति वा ।। २८ ।।

---
१. को ह्येवमिति पाठान्तरम् । २. हन्तुमिति च पाठान्तरम् ।

**योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।**
**किं तेन न कृतं पापं चोरेणात्मापहारिणा ।। २९ ।।**

**वादिराजीयम्–** एवमुक्तरीत्या नित्यस्वतन्त्रत्वदुःखास्पृष्टत्व स्वाधीन-सत्ताकत्वसाकल्येन सर्वापरिज्ञेयत्वाद्यनेकसद्गुणपूर्णस्य हरेरस्वतन्त्रत्व-दुःखस्पृष्टत्वपराधीनसत्ताकत्वाद्यनेकदोषदुष्टस्य जीवस्य च ''द्वासुपर्णे''त्यादि श्रुत्युक्तकर्मफलाशनानशनभेदेन सर्वदा वैलक्षण्योपेतबिम्बभावस्य अनादित एव सिद्धत्वाद्भगवतः स्वामिसेवकभावोपास्तिमपहाय ''ब्रह्माहमस्मी''त्यैक्यो-पासनशीलः पुरुषः सर्वपापभागिति विधत्ते — **य इति** । यस्तमोऽधिकारी जीवः **अन्यथासन्तं** विरुद्धधर्माधिकरणत्वेन जीववैलक्षण्येन स्थितं **आत्मानं** सर्वान्तर्यामिणं भगवन्तं अन्यथा स्वात्मैक्यभावेन (प्रतिपद्यते) मनुते, **तेन** (आत्मापहारिणा) स्वातन्त्र्यादिसर्वगुणसम्पन्नेश्वरापहारापराधवता **चोरेण** स्वात्मन्यविद्यमानभगवन्निष्ठगुणस्वीकाराच्चोरस्तादृशेन चोरेण पापिना **किं** कीदृशं **पापं** अन्धतमःप्रापकं पापं **न कृतं** नाचरितं ? किन्तु पापत्वा-वच्छिन्नं पापं सर्वमपि पापं कृतमेवेत्यर्थः । अनेनैक्योपासनायाः सर्व-पापसाधनत्वेन अधिकारिणा सा सर्वथा न कार्येत्यभिप्रायोऽसूचीति ।।१४।।

**सत्यधर्मीयम्–** सवायमिति न हि तज्ज्ञानं दुर्घटमित्यत एवं मन्तु-र्मन्तुरेवेत्याह– **य इति** । **अन्यथा** स्वस्वेतरसर्वभिन्नतया सन्तं **आत्मानं अन्यथा** स्वतादात्म्येन **प्रतिपद्यते** जानाति । तत्सर्वज्ञत्वा-द्यपहारात्स आत्मापहारी जातस्तेन स्तेनेन किं पापं न कृतं सर्वं च पापं तेन कृतमेवेति न तथा मनुयान्मनुज इति भावः । आत्मानं स्वं **अन्यथा सन्तं** दुःखित्वासर्वज्ञत्वादिमत्वेन विद्यमानं **अन्यथा** सर्वज्ञत्वादिमत्तया प्रतिपद्यते **तेनात्मापहारिणा** स्वस्वरूपापलायिना किं पापं न कृतमिति वा ।। २९ ।।

**अश्रान्तः स्यादनादानात्संमतो निरुपद्रवः ।**
**शिष्टो नशिष्टवत्स स्यात् ब्राह्मणो ब्रह्मवित्कविः ।। ३० ।।**

**वादिराजीयम्–** एवं मिथ्याभूतजीवेशाभेदज्ञानस्य अन्धन्तमः-प्रापकमहापापसाधनत्वान्मुमुक्षुणा विषयविरक्तिपूर्वकं मिथ्याज्ञानं न सम्पादनीय-मेवेत्याह—**अश्रान्त इति । अनादानात्** स्वात्मनि मिथ्याभूतपरब्रह्मैक्य-ज्ञानजनितेश्वरनिष्ठस्वातन्त्र्यादिगुणास्वीकारात् **अश्रान्तः** मिथ्याज्ञानि-प्राप्यनित्यदुःखात्मकतमस्सम्बन्धिदुःखानुभवश्रमरहितः स्यादिति सर्वत्र सम्बध्यते । यद्वा, **अनादानात्** ''मात्रास्पर्शास्तु कौन्तेय'' इत्यादिषु दुःखदत्वेनोक्तविषयाणामस्वीकारात् **अश्रान्तः** तदनुभवोत्पन्नश्रमरहितः स्यादिति वा । **सम्मतः** शिष्टसम्मतसदाचाराचरणेन वेदशास्त्राणां सम्मतः स्यात् । **निरुपद्रवः** देहगेहादिष्वत्यासक्तिजनितसांसारिकोपद्रवरहितः स्यात् । यद्वा, कामक्रोधाद्यरिषड्वर्गकृतोपद्रवरहितो वा स्यादिति । **शिष्टो** गुर्वादिभिः सर्वदा शिष्टोऽपि, 'अहं तु शिष्ट एवास्मि, मया सर्वं ज्ञातमेवास्त्यतः परमगुर्वादिभिः शिक्षणीयांशो नास्त्येव' इति दुरहङ्कारमपहाय शिष्टसज्जना-ननुसृत्य वारंवारं सच्छास्त्रश्रवणादिविषयेऽ**नशिष्टवत्** कदाप्यशिक्षित-वदादरवान्स्यात् । अनेन शिक्षितोऽपि पुनः शिक्षाविषये स्वोत्तमेषु शिक्षित-वत्स्वात्मानं न प्रकाशयेदित्यभिप्रायः सूचितः । **ब्राह्मणः** एवंविधो ब्राह्मण एव ब्रह्मवित् ब्रह्मज्ञानी, नान्यः **सः** स एव **कविः** स्वोद्धाराय चतुरः ।। १५ ।।

**सत्यधर्मीयम्–** निर्द्वन्द्वताऽधिकारिनिर्द्वन्द्वताप्रापिकेति वक्ति–**अश्रान्त इति । अनादनात्** इदमदनाय चेत्क्षुदपहन्तुं शक्यामित्यादि प्रकारेण तत्तद्विषयास्वीकारात् । **अश्रान्तः** श्रमवान्यो न स्यात् अत एव तदलाभप्रयुक्तक्रोधाद्युपद्रवरहितः । **शिष्टः** सदाचारोऽपि । शिष्टवत्

तदाचारस्फोरको न स्यात् । न च शिष्टतां स्पष्टयेद्यः स एव ब्राह्मणः । ब्रह्मवित् । **कविः** अतीतादिदर्शीच संसारनिःसारताज्ञान्येवं चरेदिति त्वमेवं चरेति तात्पर्यम् ।। ३० ।।

**ये यथा वान्तमश्नन्ति श्वाला नित्यभूतये ।**
**एवं ते वान्तमश्नन्ति स्ववीर्यस्योपजीवनात्[१] ।। ३१ ।।**

**वादिराजीयम्–** परमहंसाचार्यः सर्वज्ञः सनत्सुजातमुनिः ''काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः'' ''स संन्यासी च योगी च न निरग्निर्न चाक्रियः'' इत्यादिप्रमाणोक्तसंन्यासापरपर्यायकाम्यकर्मन्यासरूपसंन्यास धर्मविशिष्टगृहाश्रम्यनुष्ठेयमोक्षसाधनीभूतभागवतधर्मानभिधायेदानीं परमहंसा-श्रमधर्मान् अभिधातुकामस्त्वादौ चतुर्थाश्रमिणां स्वाश्रमोचितधर्मापरिज्ञानेन स्वपूर्वाश्रमोपार्जितधनादिनोत्पन्नान्नादिना स्वयात्राचरणेन तेषां महानर्थप्राप्तिरिति सदृष्टान्तोपपादनेन 'संन्यासिभिर्देहयात्रावशेषित' इत्यादिप्रमाणानुसारेण सर्वं परित्यज्य ज्ञानपूर्वकानुष्ठानमेव कार्यं, नान्यथेत्युपदिशति– **य इति** ।

''मूढाः श्वाला इति प्रोक्ताः श्वा श्वाला इति चोच्यते'' इत्यभिधानात् **ये श्वालाः** जात्या ये श्वानाः ते **अभूतये** स्वकृतपापफलभोगाय **नित्यं वान्तं** स्ववान्तमेवोद्गारितं स्ववमनमित्यर्थः, **अश्नन्ति** खादन्ति; एवं तथा **ते श्वालाः** ते मूर्खाः, संन्यासं गृहीत्वा सन्यासधर्मानभिज्ञाः मूर्खसंन्यासिन इति **स्ववीर्यस्य** चतुर्थाश्रमस्वीकारात् पूर्वमेव स्वशक्त्योपार्जितस्य हिरण्यादेः **उपभोजनात्** चतुर्थाश्रमस्वीकारानन्तरमपि तदुपभोगेनैव स्वदेहयात्राकरणात् **वान्तं** वमनमेवाश्नन्तीत्युच्यते । कुत इति चेत्, संन्यासग्रहणसमये सर्वं न्यस्तमिति पूर्वपरिगृहीतसर्ववस्तुनः परित्यागविधानात्, संन्यासग्रहणानन्तरं

१. उपभोजनादिति पाठान्तरम् ।

स्वदेहयात्रानिर्वाहाय पुनस्तत्स्वीकारे वान्ताशा भवतीति शास्त्रनिश्चयात् । भिक्षुणा पूर्वाश्रमार्जितहिरण्यादिस्वीकारो न कार्य इत्यभिप्रायः ।। १६ ।।

**सत्यधर्मीयम्–** स्वकृतख्यापनकृत् तदेवमिति सनिदर्शनं दर्शयति – **य इति** । यथा **श्वालाः** श्वानः मूढाश्च । मूढाः श्वाला इति प्रोक्ताः श्वाश्वाल इति दर्शनादित्युक्तेः । स्वकृतप्रकाशनादिति स्ववीर्यस्योपजीवनं तस्मात्स्वोपजीविकां संपादयन्तो वान्ताशिश्वसमा इति गूढाचारिभिर्भाव्य-मिति भावः ।। ३१ ।।

**अनाढ्या मानुषे वित्ते आढ्या वेदेषु ये द्विजाः ।**
**ते दुर्धर्षा दुष्प्रकम्प्या विन्यात्तान् ब्रह्मणस्तनुम्[१] ।। ३२ ।।**

**वादिराजीयम्–** ननु यदि हि संन्यासिनां हिरण्यादिस्वीकारो न युक्तः तर्हि तदभावेन देहयात्रासम्भवात् तेषां संन्यासधर्माचरणोच्छेदप्रसङ्ग इति चेत् ''चीराणि किं पथि न सन्ति दिशन्ति भिक्षां'' इत्यादौ विरक्तिभूषणनां मस्करिणां एवं प्रकारान्तरेण जीवनोपायस्योक्तत्वात्, ''कस्माद्भजन्ति कवयो धनदुर्मदान्धान्'' इति धनोपार्जनस्य निषेधितत्वाच्च तत्परित्यज्य वैदिक-धनोपार्जनमेव कार्यं, महापुरुषार्थहेतुत्वादिति तदुपपादयति— **अनाढ्या इति** । **मानुषे** प्रवृत्तिमार्गवर्तिमनुष्यसम्बन्धिनि **वित्ते** हिरण्यादिसंसारोपयोगिनि वित्ते **अनाढ्याः** निष्किञ्चनाः । **वेदेषु** वेदयन्तीति वेदाः, ''विद् ज्ञाने'' इति धातोः, तेषु वेदसच्छास्त्राख्यधनेषु **आढ्याः** तदध्ययनादिना सम्पन्नाः, एवम्भूता **ये द्विजाः** ये सन्यासिनः, एवास्मिन्नेव जन्मनि ब्रह्मचर्याद्याश्रमत्रयं अनुभूय चतुर्थाश्रमस्वीकारसमये स्वोत्तमपरमहंसकरकमलसञ्जातत्वेन पुनर्जन्मान्तरप्राप्त्या यतीनां द्विजत्वमिति । यद्वा, ब्रह्मचर्याद्याश्रमविशिष्टाः

१. तनूनिति पाठान्तरम् ।

द्विजाः वा । **ते** तादृशाः एव द्विजाः **दुर्धर्षाः** दुष्टैर्वा मिथ्याज्ञानिभिर्वा न निग्राह्याः । **दुष्प्रकम्प्याः** निवृत्तिमार्गानुष्टानादुर्जनैश्चालयितुमशक्याः । एवंविधा ये द्विजाः **तान् ब्रह्मणः** परब्रह्मणः **तनून्** "ज्ञानी त्वात्मैव मे मतं" इत्यादिप्रमाणानुसारेण विशेषसन्निधानपात्रत्वात्प्रतिमास्थानीयान् **विन्यात्** जानीयात् ज्ञानीति शेषः । "विद् ज्ञाने" इति धातुः ।।१७।।

**सत्यधर्मीयम्**– इदानीं वेदनिष्णातानभिष्टौति– **अनाढ्या इति । ये मानुषे वित्ते** पुत्रकलत्रादिरूपे **अनाढ्याः** अनासक्ता इति यावत् । **वेदेषु** तदाद्यावेदिताहिंसादिषु आढ्याः आसक्ताश्च ये द्विजास्ते । **दुर्धर्षाः** धर्षयितुमनर्हाः **दुष्प्रकंप्याः** स्वधर्मतश्च्यावयितुमनर्हाः । तांश्च **ब्रह्मणो** भगवतो वेदस्य वा **तनुं** सन्निधाननिधानानीति तां विद्याज्जानीयात् ।। ३२ ।।

**सर्वान् स्विष्टकृतो देवान् विद्याद्य[1] इह कश्चन ।**
**न समानो ब्राह्मणस्य[2] यस्मिन् प्रयतते स्वयम् ।। ३३ ।।**

**वादिराजीयम्**– नित्यं सर्वोत्तमत्वेन सर्वोपकारित्वेन सर्वस्वातन्त्र्याद्यनन्तगुणपूर्णत्वेन नारायणं भजमानेन ज्ञानिना स्वात्मनः सर्वेन्द्रियाणां सन्मार्गप्रवृत्तौ प्रेरणात्तदधीनसत्तासम्पन्नतदितररमादिसर्वतत्वदेवेष्वपि महोपकारित्वसम्भवाद्विशेषतो भगवदनुग्रहप्राप्तये तेऽपि भजनीया इत्याह– **सर्वानिति** । अस्मिन्श्लोके "कश्चने"ति पदस्य 'कः च ने'ति पदच्छेदः । **यः कः** को ज्ञानी **इह** अस्मिन्स्वदेहे सर्वान् अशेषान्देवान् तत्वाभिमानिनो देवान् **स्विष्टकृतः** स्वस्येष्टकारिण इति **विन्यात्** जानीयात् **सः ब्राह्मणः** स एव ब्राह्मणः **समानः** "माङ् मान" इति धातोः मानेन ज्ञानेन सहितः नेति न, किन्तु ज्ञानसम्पन्न एवेति । अनेन रमादिसर्वतत्वदेवेषु स्वात्मनो

१. विन्यादिति पाठान्तरम् । २. ब्राह्मणः स्यात् इति पाठान्तरम् ।

महोपकारित्वज्ञानपूर्वकं तारतम्यज्ञानवानेव ज्ञानी, न तु तूष्णीं शास्त्राध्ययनवानित्यभिप्रायो दर्शितः । 'कश्चने'ति पदछेदे **यः कश्चन** ब्राह्मणः स्वेष्टकारितत्वदेवान् तरतमभावनया विना **विन्यात्** जानीयात्, स ब्राह्मणः तत्तद्देवतातारतम्यज्ञानसम्पन्नज्ञानिनः **समानः न स्यात्**; तत्समानो न भवति, किन्तु नीच इत्यर्थः । कुत इति चेत् – यतः **स्वयं** स्वयमेव स ब्राह्मणः **यस्मिन्** आभिमानिकसंसारे **यतते** देहगेहादावेव तदीयाभिमानेन तत्रैव प्रयत्नशीलो वर्तते । अतो विरुद्धधर्माधिकरणज्ञानिनो न समान इति पूर्वेण (सम्बन्धः) ।। अनेन अभिमानिकसंसारसक्तिसम्पन्नाज्ञानिब्राह्मणस्य संसारविमुक्तनिरभिमान्यपरोक्षज्ञानिनः कथं साम्यं स्यात् ? न कथमपीत्यर्थो दर्शित इति ।। १८ ।।

**सत्यधर्मीयम्–** तन्महात्म्यान्तरमाह– **सर्वानिति । स्विष्टकृतः** सुष्टु इष्टं कुर्वन्तीति तथा तान् । तथा च श्रुतिः- स्विष्ठं कुर्वन् स्विष्टकृदिति । तांश्च देवान् उद्दिश्य हविषस्त्यागार्थं **विद्यात्** तद्याजीति यावत् । **स कश्चन** देवतायाज्यपि **ब्राह्मणस्य** ब्रह्मज्ञानिनः तेन न समानः । न केवलं तद्याजी ब्रह्मज्ञानिना न समानः किं तु स्वयं यस्मि-न्देवताविशेषे प्रयतते यष्टुं स देवताविशेषोऽपि न समान इति । इदं चतुर्मुखादिरूपब्रह्मविदपेक्षयेति ज्ञेयम् । तथा चोक्तं मोक्षधर्मे– ब्राह्मणस्य न सादृश्ये वर्तते सोऽपि किं पुनः । इज्यते येन मंत्रेण यजमानो द्विजोत्तम इति । मनुस्मृतौ च– ब्रह्मविद्यः परम्भूतं न किञ्चिदिति ।। ३२ ।।

**यमप्रयतमानं तु मानयन्ति स्म मानिनः ।**
**न मान्यमानो मन्येत नावमाने तु संज्वरेत् ।। ३३ ।।**

**वादिराजीयम्–** मानापमानज्ञानशून्यदेहाभिमानरहितासम्प्रज्ञात-

समाधिदृष्टभगवदपरोक्षसुखमग्रज्ञानिसामान्यलक्षणमुक्त्वा इदानीं तस्यैव विशेषलक्षणान्याह – **यमिति । अप्रयतमानम्** अन्येभ्यः स्वबहुमानाय प्रयत्नमकुर्वाणं **यं** ज्ञानिनं दृष्ट्वेति शेषः । **मानिनः** ज्ञानिनः ''माङ् मान'' इति धातुः, 'इण् गता'विति धातुद्वयबलात् मानेन ज्ञानेन इताः, मानिनो ज्ञानिन इति । यद्वा– **मानिनः** मानोऽहङ्कारस्तेन इताः, ऐश्वर्याद्यहङ्कार-सम्पन्ना राजानो वा । **मानयन्ति** नमनादिसत्कारं कुर्वन्ति **मान्यमानः, मान्यं** ज्ञानिजनमान्यं **मानं** ज्ञानं यस्यासौ तथा सः एतादृशस्तदन्यो ज्ञानी **मन्येत तं** सर्वमानिनमेव ज्ञानिनं जानीयात् । यद्वा— अहमपि एवमेव देहाभिमानशून्यज्ञानी स्यामिति **तं** दृष्ट्वा मन्येतेति वा । अनन्तरम् **अवमाने** स्वात्मन अन्येभ्यः असन्माने जातेऽपि **न सञ्ज्वरेत्** जनितक्लेशेन सन्तप्तो न स्यात् । अनेन ज्ञानी स्वान्यदेहाभिमानशून्यज्ञानिदृष्टान्तेन स्वयमपि तथाविधाचारशीलः स्यादित्यर्थः सूचित इति ।। १९ ।।

**सत्यधर्मीयम्–** पुनरपि तस्य ज्ञानिनो लक्षणमाह– **यमिति । यं** ब्रह्मज्ञानिनं **अप्रयतमानं** भिक्षाटनादिप्रवृत्तिरहितं भगवदेकध्यानपरमिति यावत् । **मानिनः** अवधूतचर्याभिज्ञाः केचित्पुरुषाः मानयन्ति चेत् तत्र **मान्यमानः** पूज्यमानो देहाभिमानादहमिति न मन्येत तेन न प्रहृष्ये-दिति यावत् । एवमवधूतस्वरूपानभिज्ञैरवमानेतु **न संज्वरेत्** तदभि-मत्याऽहमवमानित इति न सन्तप्येत् । तथा च दक्षः–

वाश्यैकं तक्षतो बाहू चन्दनेन च लिंपतः ।
नाकल्याणं न कल्याणमुभयोरपि चिन्तयेदिति ।। ३३ ।।

**[१]लोकः स्वभाववृत्तिर्हि निमेषोन्मेषवत्सदा ।**
**विद्वांसो मानयन्तीह इति मन्येत मानितः ।। ३४ ।।**

१. लोकः स्वभाव एषो हि इति पाठान्तरम् ।

**वादिराजीयम्–** इदानीं द्वन्द्वसहिष्णुत्वमेव ज्ञानिनो मुख्यो धर्म इति ज्ञापयितुं ज्ञानिनोऽपि पुरुषसामान्यात्परकृतसन्मानादिजनितसुखाद्यनुभवस्य सत्वेऽपि स्वस्य ज्ञानित्वेन पामरजनकृतमानापमानयोः तात्कालिकत्वात् ज्ञानिना स्वनिष्ठज्ञानदार्ढ्येनैव सुखादिजनितविकासादिभावो न सन्दर्शनीयैवेत्याह— **लोकस्वभाव इति** । **एषः** सन्मानासन्मानकरणलक्षणः **लोकस्वभावः** लोकानां पामराणां जनानां स्वभावः स्वाभाविको धर्मः **निमेषोन्मेषवत्** अक्ष्णोर्निमेषोन्मेषवत् सदा सर्वदा "सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्" इति **इह** संसारदशायां **विद्वांसः** अपरोक्षज्ञानिनः **मानयन्ति** मानं ज्ञानं यन्ति प्राप्नुवन्ति, "या प्रापण" इति धातुः । सुखदुःखयोरन्योन्यानन्तर्येणानुभोक्तव्यत्वमनित्यत्वं च जानन्तीत्यर्थः । अतः **मानितः** जनैः सन्मानितः, उपलक्षणतः असन्मानितोपि ज्ञानी **इह** संसारे मन्येत अन्यकृतयोः सुखदुःखयोरनित्यत्वं जानीयात् ।। २० ।।

**सत्यधर्मीयम्–** कथं तर्हि मन्येतेत्यतोऽत्र सदसतां ब्रह्मवित्पूजनापूजने स्वभाव इति जानीयादित्याह– **लोकेत्यादि श्लोकद्वयेन** । ये विद्वांसः ते मानयन्तीति तैर्मानितः सन् ज्ञानिसम्माननं नेत्रयोः निमेषोन्मेषवत्तत्स्वभाववृत्तिरिति मन्येत ।। ३४ ।।

**अधर्मविदुषो मूढा लोक[१]शास्त्रविवर्जिताः ।**
**न मान्यं मानयिष्यन्ति एवं मन्येत [२]मानितः ।। ३५ ।।**

**वादिराजीयम्–** ननु सन्मानयोग्यानां ज्ञानिनां महद्भिरसन्मानकरणे को हेतुरित्याशङ्कायां तेषां सच्छास्त्राभ्यासाकरणेन धर्मज्ञानशून्यत्वमेव हेतुरिति ज्ञात्वा ज्ञानी तैरवतो मानितोपि न क्लिष्टो भूयादिति तां परिहरति–

१. लोके इति पाठान्तरम् । २. मन्येदमानितः इति पाठान्तरम् ।

**अधर्मविदुष इति । लोके** मनुष्यलोके **ये शास्त्रविवर्जिताः** सच्छास्त्राध्ययनजन्यज्ञानहीनाः अत एव **अधर्मविदुषः** सच्छास्त्रजन्यज्ञानहीनत्वेन अधर्मज्ञानसम्पन्नाः ये अज्ञानिनस्त एव **मान्यं** सन्मानयोग्यं ज्ञानिनं **न मानयिष्यन्ति** न सन्मानयिष्यन्ति । **अमानितः** तैरेवमसन्मानितोपि **इति** अज्ञत्वादेते मामवमन्यन्ते इत्येव **मन्येत्** जानीयात् ।। २१ ।।

**सत्यधर्मीयम्–** अमानितोऽवज्ञातो ज्ञान्येवं मन्येत । किमिति–अधर्मविदुषः । **विद्वांसः** सूक्ष्मधर्मानभिज्ञाः मूढाः **लोकशास्त्राभ्यां** सदाचारधर्मशास्त्राभ्यां विवर्जिताः **मान्यं** भगवज्ज्ञानिनं न मानयिष्यन्तीति यत् तत् अधर्मविदुषः स्वभाव इति मन्येतेति तानधर्मविदुषो मन्येतेति ।। ३५ ।।

**[1]नैव मानं च मौनं च सहितौ वसतः सदा ।**
**अयं मान्यस्य विषयो[2] ह्यसौ मौनस्य तद्विदुः ।। ३६ ।।**

**वादिराजीयम्–** एवमज्ञानजनितदेहगेहादिनिष्टभूताभिमानशून्यज्ञानिलक्षणान्यभिधायेदानीं विरुद्धधर्माधिकरणयोर्दुरभिमानानभिमानयोर्विषयव्यवस्थां दर्शयति— **नेति । मानं** देहादिषु मदीयत्वरूपो दुरभिमानः । लिङ्गव्यत्ययः ''छान्दसत्वान्न दोषाय'' । **मौनं** सम्बन्धप्राप्तसुखादिजनितविकासाद्यप्रदर्शनरूपतूष्णीम्भावः । चेति परस्परसमुच्चये । उभौ मानमौनाविति धर्मौ **सहितौ** एकाधिष्ठान एव मिलितौ, भूत्वेति शेषः। सदा कदापि **न वसतः** न तिष्ठतः । ननु तर्हि मानमौनयोरेकाधिष्टानावस्थानाभावे कस्य किमधिष्टानमित्यतो विवेकमाह—**अयमिति । अयं** प्रत्यक्षगोचरः **लोकः** संसारी जनः **मानस्य** अभिमानस्याधिष्टानमिति शेषः । **असौ** निवृत्ति-

१. नवै इति पाठान्तरम् । २. अयं हि लोको मानस्य इति पाठान्तरम् ।

मार्गवर्त्त्यपरोक्षसम्बन्धिलोकः ज्ञानिजनः । लोक इत्युभयत्र सम्बध्यते । **मौनस्य** द्वन्द्वसहनरूपतूष्णीम्भावस्य अधिष्टानमिति **तत्** तदेतद्विदुः कवयो विदुरिति ।। २२ ।।

**सत्यधर्मीयम्–** मानमौनयोरन्यत्र देवसंप्रज्ञातसमाधिस्थादिभ्यः एकत्र समावेशो नेत्याह– **नैवेति** । मानं मौनं चेत्येतौ **सहितौ** मिलितौ **सदा** एकत्र न वसतः । **अयं** प्रात्यक्षिकः संसारः लोक्यत इति तच्छब्द-वाच्यः । मानविषयः मौनस्य च विषयः । **असौ** पारत्रिको भगवानिति महान् । विषयकृतो भेद इति नैकत्रावस्थितिः । नैतन्मन्मात्रसिद्धमिति बहुसंमतिमाह । **तत्** वैचित्र्यं विदुर्विद्वांस इति । मानस्य वृत्तिः **असौ** स्वित्यानन्दः समुद्दिष्ठ इत्यादेः स्वरूपानन्दभिन्न एवेति । तस्य विषयोऽयं लोकः । मौनस्य च **असौ** एन भगवता प्राप्यः सुः असु-स्तस्मिन् भवगवदीये स्वरूपानन्द इत्यतिभिन्नफलयोरेकत्र कथं समावेशः स्यादिति वा । उक्तं च– अन्नपानादिभोगेषु भावो मान इति स्मृतः । ब्रह्मानन्दसुखावाप्तिहेतुर्मौन इति स्मृत इति । हिराहाथ मौनं चेत्यादि प्रसिद्धम् ।। ३६ ।।

**श्रीर्हि मानार्थ[1] संवासात्सा चापि परिपन्थिनी ।**
**ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ।। ३७ ।।**

**वादिराजीयम्–** अतिप्रयत्नसाध्यविषयविरक्तिविशिष्टनिरभिमानपूर्वक-भगवदर्पणानुसन्धानोपेतसन्न्यासाद्याश्रमधर्माचरणं स्वरूपसुखाभिव्यक्तये खलु कार्यमिति विधीयते चेत्तर्हि तस्य विषयोपरक्तिपूर्वकदुरभिमानसहकारि-अल्पायाससाध्यकाम्यकर्मानुष्ठानेनापि स्वर्गादिसुखप्राप्तिश्रवणात् अन्यतरयोः अतिक्लेशकरं पूर्वोक्तधर्माचरणमेव सुखेप्सुना किमर्थमनुष्टेयं इत्याकाङ्क्षायां

१. मानार्थसञ्जातेति कामार्थसञ्जातेति च पाठान्तरम् ।

हित्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि ।
यत्र क्व वा भद्रमभूदमुष्य को वार्थ आप्तो भजतां स्वधर्मम् ।।

इति भागवतोक्तरीत्या साभिमानचरितकर्मणां मोक्षमार्गपरिपन्थित्वेना-नित्यत्वेन च पतनानन्तरं दुःखसाधनत्वात्काम्यकर्मसाध्यस्वर्गादिकस्य पामराणां सुखवदवभासमानत्वेपि मुमुक्षुणस्तद्धेयेमित्युपदिशन्साभिमान्य-नभिमानिकृतसुकृतजनितपारत्रिकफलस्य वैलक्षण्यमप्याह — **श्रीरिति** । **मानार्थसञ्जाता** मानो दुरभिमानः अर्थ्यत इत्यर्थो विषयवर्गस्ताभ्यां सञ्जाता समुत्पन्ना । यद्वा **कामार्थसञ्जाता** कामाः विषयास्तेषामर्थे सञ्जातेति वा । आभिमानिकविषयाभिलाषकृतकाम्यकर्म जनितस्वर्गादिस्थेत्यर्थः । **श्रीः** स्वर्गादिश्रीः **परिपन्थिनी** अनित्यत्वाद्दोषदुष्टत्वान्मोक्षविरोधिनी । हीत्यनेन तस्याः सदोषित्वेन हेयत्वं सूच्यते । **ब्राह्मी** ब्रह्मज्ञानप्राप्तश्रीः मोक्षश्रीः प्रज्ञाहीनेन निरहङ्कारपूर्वकविष्णुसर्वोत्तमत्वज्ञानशून्येन पुरुषेण **दुर्लभा** दुष्प्रापा । अत्रापि हीत्यनेन ब्राह्मलक्ष्म्याः नित्यसुखात्मत्वेन तस्या एवापाद्यत्वं सूच्यते ।। २३ ।।

**सत्यधर्मीयम्**– सर्वथा मानमानसस्यापवर्गमार्गप्रच्युततेरितेतीरयति– **श्रीर्हीति** । हे क्षत्रिय **मानार्थो** मानविषयस्तत्संवासात् । प्राप्या या **श्रीः** ऐहिकसंपत् सा **परिपन्थिनी** अपवर्गमार्गविरोधिनी छन्दस्तुल्य-त्वात्परिपन्थिनीति भवति । **प्रज्ञाहीनेनेति** मौनादिरहितेन । **ब्राह्मी** ब्रह्मण इयं जाताविति टिलोपः । टिटढाणडीष् मुक्तिभोग्या श्रीः सुदुर्लभा ।। ३७ ।।

**द्वाराणि सम्यक् प्रवदन्ति सन्तो**
**बहुप्रकाराणि दुराधराणि[१] ।**

१. दुराचराणीति पाठान्तरम् ।

**सत्यार्जवं[1] ह्रीदमशौचविद्या**
**षण्मानमोहप्रतिबन्धकानि ।। ३८ ।।**

**।। इति श्रीमन्महाभारते शतसाहस्र्यां संहितायाम् उद्योगपर्वाणि सनत्सुजातीये प्रथमोऽध्यायः समाप्तः ।।**

**वादिराजीयम्–** सर्वज्ञः सनत्सुजातः "प्रमादं वै मृत्युमहं ब्रवीमि" (अ.१ श्लो.४) इत्यारभ्य यावदध्यायान्तं (१) मिथ्याज्ञाना ज्ञानयो-रेवानर्थप्रदत्वं, (२) तत्परिहारसाधनविष्णुसर्वोत्तमत्वज्ञानस्यैव मोक्षसुखप्रदत्वं, (३) परिहारसाधनविष्णुसर्वोत्तमज्ञानं बह्वागमप्रमाणैः संसाध्योपसहंरन् पुनरपि प्रश्नबीजमुत्पादयितुं मिथ्याज्ञानाज्ञानशब्दपर्यायवाच्ययोर्मानमोहयोर्विनाशाय स्त्रीशूद्रादिसर्वाधिकारिसाधारणसाधनानुष्ठानषट्कमुपदिशति – **द्वाराणीति** । **सन्तः** शास्त्रार्थाभिज्ञाः ज्ञानिनः **मानमोहप्रतिबन्धकानि** मानो देहादौ मदीयत्वरूपः मिथ्याहङ्कारः, देहगेहादिषु अनित्यत्वं प्रत्यक्षेण पश्यन्नपि न पश्यन्निव प्रवृत्तिः **मोहः** । एवं विधयोर्मानमोहयोः **प्रतिबन्धकानि** स्तम्भकानि **षट्** षट्सङ्ख्याकानि साधनानीति सन्तः प्रवदन्ति । तानि साधनानि कीदृक्लक्षणानि ? **दुराचराणि** श्रमसाध्यानि । षण्णां नामान्यह– **सत्यार्जव इत्यादिना** । (१-२) **सत्यार्जवे** सत्यं यथार्थभाषणम् । भूतहितं वा । आर्जवं ऋजुमार्गवर्तित्वम् । एवंविधे सत्यार्जवे चेति । (३) **ह्रीः** निषिद्धाचरणे लज्जा । (४) **दम** इन्द्रियनिग्रहः । (५) **शौचं** मृज्जलाभ्यां कृतं बाह्यम् । भावशुद्धिस्तथान्तरमिति द्विविधं शौचम् । (६) **विद्या** परापरविषया ब्रह्मविद्या । इत्येते षट् मानमोहनाशकानीत्यर्थः ।। ४ ।।

**।। इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातीये श्रीवादिराजतीर्थविरचिते विषमवाक्यप्रकाशे प्रथमोऽध्यायः ।।**

१. सत्यार्जवे इति पाठान्तरम् ।

**सत्यधर्मीयम्–** इदानीं ब्राह्म्याः संपदो द्वाराण्याहुर्बहुधा बहुज्ञास्तत्रे-मान्यावश्यकानि कानिचिदिति ससंख्यं तान्याख्याति– **द्वाराणीति** । **दुराधराणि** इतरदुर्धराणि **मानमोहप्रतिबन्धकानि** सन्तः बहुप्रकाराणि द्वाराणि प्रवदन्ति । तन्मध्ये **सत्यं** भूतहितं **आर्जवं** ऋजुत्वं एकवद्भावः सर्वो द्वन्द्वो विभाषेति । **ह्रीः** लज्जा अकार्यकरणे महात्मसमीपे स्वकौशल प्रदर्शनेवा । **दम** इन्द्रियनिग्रहः **शौचं** मलापकर्षः **विद्या** ब्रह्मज्ञानं चेति षट् सम्यग्द्वाराणीति ।

**।। इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वाद्यनेकगुणसंपन्नश्रीमन्मूल-रामचन्द्रदेवदिव्यपादपद्माराधकश्रीमत्सत्यवरतीर्थश्रीपादकरकमलसञ्जात-श्रीमत्सत्यधर्मयतिकृतायां व्याख्यायां श्रीमदुद्योगे सनत्सुजातीये प्रथमोऽध्यायः ।।**

# अथ द्वितीयोऽध्यायः

धृतराष्ट्र उवाच–

**कस्यैष मौनः कतरन्नु मौनं**
**प्रब्रूहि विद्वन्निह मौनभावम् ।**
**मौनेन विद्वानुत[१] याति मौनं**
**कथं मुने मौनमिहाचरन्ति ।। १ ।।**

**वादिराजीयम्–** एवं धृतराष्ट्रः ''असौ मौनस्य'' इत्यादिना श्रुत-मौनविषयज्ञानिलक्षणोऽपि पुनस्तदेव विशेषतो ज्ञातुकामो मौनादिस्वरूपं विविच्य पृच्छति— **कस्येति । हे विद्वन्** सर्वज्ञ सनत्सुजात! **एषः** ''असौ मौनस्य'' इत्यादिना त्वया अभिहितः **मौनः कस्य** कथम्भूतस्य ब्राह्मणस्य विषयः ? **मौनं कतरत्** कस्य पक्षपाती ? अथवा मौनं किं लक्षणकमिति वा । **मौनभावं** मौनस्वभावं, मौनस्य विद्यमानत्वं **मौनेन** येन मौनानुष्ठानेन **विद्वान्** ज्ञानी **मौनं** मुनिप्राप्यं भगवन्तं, पुण्यसाधनी-भूतप्रसिद्धमौनं वा, **उपयाति** प्राप्नोति । **हे मुने** मौनाख्यधर्मनिष्ठसनत्सुजात! **मौनं** महापुरुषार्थसाधनं त्वदभिमतं मौनं **कथं** केन प्रकारेण **इह** साधना-नुष्ठानसमये आचरन्ति ज्ञानिन इति शेषः । मौनादीनामवश्यवेद्यत्वज्ञापनाय प्रब्रूहीत्यवोचि । न चेद्ब्रूहीत्यनेनैव चरितार्थत्वात्प्रेत्युपसर्गबन्धो न स्यादिति ।। १ ।।

**सत्यधर्मीयम्–** अयं मानस्येत्यादिना श्रुतमौनमाहात्म्यो धृतराष्ट्रः पृच्छति– **कस्येति** । हे विद्वन् **एषः** परलोकसाधनत्वेन त्वदुक्तः **मौनः कस्य** किमधिकारिक इत्यर्थः । अयमेकः प्रश्नः । ''अथ मौनमभाषणम्'' इति

१. उप इति पाठान्तरम् ।

नपुंसकत्वे सत्यप्यमरेऽत्र पुल्लिङ्गनिर्देशस्त्व-सत्सल्लापाभावरूपार्थगतत्वं लिङ्गस्येत्यभिप्रायम् । यद्वा "लिङ्गमशिष्यम्" इति भाष्याद्वा ज्ञेयः । **मौनं कतरत्** किमिति द्वितीयस्तत्स्वरूपप्रश्नः । अस्यैव विवरणं **इह मौनभावं** मौनस्वभावं तत्स्वरूपमिति यावत् । अवश्यं प्रब्रूहीति । **मौनं** अनु प्राप्यं ब्रह्म **विद्वान्** ज्ञानी किं मौनेन साधनेनोपयाति उतान्येनेति तृतीयः । **हे मुने** मौनं कथमाचरन्ति केन साधनेनाचरन्तीति मौनसाधनप्रश्नश्चतुर्थः ।। १ ।।

**सनत्सुजात उवाच–**

> **यतो न वेदा मनसा[1] सहैन-**
> **मनुप्रविशन्ति ततः स[2] मौनम् ।**
> **यत्रोत्थितो वेदशब्दस्तथाऽयं**
> **स तन्मयत्वेन विभाति राजन् ।। २ ।।**

**वादिराजीयम्–** एवं पूर्वं "असौ मौनस्य" इति सामान्यतो ब्रह्मज्ञानि-मौनयोः श्रुतविषयविषयिभावसम्बन्धज्ञानवता धृतराष्ट्रेण पुनर्ज्ञानिनि विषयी-भूतमौनस्वरूपज्ञानस्य विशेषविवित्सया "कस्यैष मौन" इत्यादिना पञ्चधा विभज्य पृष्टः सनत्सुजातः सर्वप्रश्नोत्तरगर्भितेन "यतः" इत्येकेनैव श्लोकेन तत्परिहारं वक्ति—**यत इति । यतः** यस्मात्, अनादिसम्बन्धसंसारकृता-ज्ञानान्यथाज्ञानादित्यर्थः । **हीनं** भगवद्विषयकध्यानज्ञानादिभिर्हीनं, एनं पुरुषं (इति शेषः) **वेदाः** 'वेदयन्तीति वेदाः' इत्यनेन भगवद्गुणावबोधकाः वेदाः **मनसा** "मनु अवबोधन" इति धातोः "सर्ववेदा यत्पदमामनन्ति" इत्यनेन मुख्यतो अनन्तवेदप्रतिपाद्यो भगवानेवेति अनुसन्धानज्ञानेन सह नानु-प्रविशन्ति । **ततः** वेदानुगृहीतब्रह्मज्ञानाभावात् हेतोः **मौनं** ब्रह्मज्ञानं **न** न

१. मनसैव हीनमिति पाठान्तरम् । २. नेति पाठान्तरम् ।

भवति । अनेनाज्ञानान्यथाज्ञानविशिष्टे ब्राह्मणे यद्यपि वेदविद्याधिकारोऽस्ति तथापि तस्य वेदाध्ययनेन ब्रह्मज्ञानप्राप्तिर्न स्यादिति । अनेन 'मौन'शब्दस्य ज्ञानशब्दपर्यायत्वं, ज्ञानिविषयत्वं च दर्शितम् । तेन "कस्यैष मौनः कतरन्नु मौनं" इत्येतद्विवृतम् ।।

**यत्र** यस्मिन्नधिकारिणि पुरुषे **अयं** अनन्तप्रमाणप्रसिद्धः **वेदशब्दः** "शब्दस्य हि ब्रह्मण एष पन्थाः" इत्यादिवेदैः शब्द्यते वाच्यत इति वेदशब्दो नारायणः **उत्थितः** उत्कर्षेण स्थितः, ज्ञानिध्यानादिविषयतयेति यावत् । "यत्रोत्थितः" इत्यनेन अधिकारिणोऽपि वेदप्रतिपादितयथावस्थित-ब्रह्मज्ञानपूर्वकं वेदाध्ययनमिति सूचितम् । **सः** एवंविधो ब्रह्मज्ञानी तन्मयत्वेन स्वात्मनि तच्छब्दवाच्यभगवत्प्राधान्यज्ञानित्वेन निमित्तेन **विभाति** स्वयोग्य-ब्रह्मज्ञानादिसम्पत्या विशिष्टो भूत्वा प्रकाशते ।

**हे राजन्नि**त्यनेन त्वयाऽप्येवंविधो मौनः सम्पादानीय इत्यसूचि । "यत्रोत्थितो वेदशब्दः" इत्यनेन "मौनेन विद्वानुपयाति मौनं" इत्येतद्विवृतम् । "अनुप्रविशन्ति ततो न मौनं" इत्यनेन "मौनभावं" इत्येतद्विवृतम् । "स तन्मयत्वेन विभाति" इत्येतेन "कथं मुने मौनमिहाचरन्ति" इत्येतद्विवृतम् । प्रश्नपञ्चकस्याप्येकेनैव श्लोकेन समाधानमित्यभिप्राय इति ।। २ ।।

**सत्यधर्मीयम्–** उत्तरयति– **यत इति** । यतः कारणात् वेदाः मनसा सह **एनं** भगवन्तं न प्रविशन्ति । ततः कारणात् सः मनोवाग-गोचरो भगवान् मौनमित्युच्यते वागाद्युपरतिरूपतत्प्रवृत्तिनिमित्तोपेत-त्वादिति भावः । अनेनैवंरूपेण तद्ध्यानयोग्यो यः **स** तत्राधिकारी । मौनस्वरूपं च वागुपरम एवेति प्रथमद्वितीयौ व्याख्याताविति सूचितम् ।

ननु "सर्वे वेदा यत्पदमामनन्ति" इत्याद्याः भगवत्स्वरूप-

प्रतिपादनपरा दृश्यन्तेऽतः कथं न प्रविशन्तीत्युक्तिरित्यत आह– **यत्रेति** । **यत्र** परमात्मविषये तन्माहात्म्यप्रतिपादनार्थमिति यावत् । **अयं वेदशब्दः** वेदात्मकः शब्दराशिः **उत्थितः** अनेन साकल्येन वागाद्यगोचर इति तथा व्यवहार इत्युक्तं भवति । ''यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'' इत्यादेः ।

अनेन साकल्येन तदवेद्यतया यथाशक्तिवेदवेद्यगुणाकरतया च भगवानुपास्य इत्यर्थस्य प्राप्तत्वेन मौनेन तदितरेण च साधनेनाधिकारी **मौनं तं** भगवन्तं प्राप्नोतीत्युक्तोत्तरस्तृतीयप्रश्न इत्युक्तं भवति । **सः** अधिकारी **तन्मयत्वेन** स मयः प्रधानो यस्य सः, तस्य मयो गतिर्ज्ञानं यस्य स इति वा । तत्वेन **विभाति** उक्तमौनित्वादिमान् प्रकाशते । अनेन मौनसाधनं चोक्तं भवति । ''बाल्यं पाण्डित्यं च निर्विद्याथ मुनिरमौनं मौनं च निर्विद्य'' इत्यादेः । यो ब्रह्मप्राप्तियोग्योऽसावागमजज्ञानं लब्ध्वा युक्तिजज्ञानमापादयेत् । तदुभयलाभानन्तरं ध्यानी भवति । तेन चापरोक्षज्ञानं प्राप्नोति अथ जीवन्मुक्त इत्युच्यत इति तत्वप्रकाशिकोक्तेरथ मुनिरित्याद्यर्थो ज्ञेयः । ''पाण्डित्यमागमज्ञानं बाल्यं युक्तिबलोद्भवम्'' इति बृहद्भाष्योक्तेः ।। २ ।।

**ऋचो यजूंष्यधीते यः सामवेदं च यो द्विजः ।**
**पापानि कुर्वन् पापेन लिप्यते न स लिप्यते ।। ३ ।।**

**वादिराजीयम्–** मौनमौनिस्वरूपविचारप्रसङ्ग-प्राप्तमहाफलप्रापकश्रुतवेदविभवो धृतराष्ट्रः, 'यथा मोक्षसाधनीभूतापरोक्षज्ञानस्य स्वसम्बन्धेन परोक्षज्ञानिनः उत्तरपूर्वाधयोरश्लेषविनाशित्वप्रापकत्वमस्ति तथा ते ऋगादिवेदाध्ययनमात्रवतोऽपि ब्राह्मणस्य अधीतवेदसम्बन्धजनितसुकृतबलात् हत्यादिकृतपापलेपोऽस्ति, न वा' इति पृच्छति— **ऋच इति** । **ऋचः** ऋक्शाखाः

**यजूंषि** यजुःशाखाः सामवेदं च यः **द्विजः** ब्राह्मणः **अधीते** पठति स द्विजः **पापानि** अनिष्टापादकपापकुलानि **कुर्वन्** आचारमाणः सन् तैः पापैः लिप्यते वा न लिप्यत इति प्रश्नः ।। ३ ।।

**सत्यधर्मीयम्–** धृतराष्ट्रः स्वपृष्टे सर्वस्वेऽनुत्तरितेऽपि वेदान् वेद यः सोऽपाप इति बहुमुखश्रुतिपरायतचित्तस्तन्मध्ये पृच्छति– **ऋच इति । यः** पुमान् । **ऋचः** ऋग्वेदं **यजूंषि** तद्वेदं सामानि चाधीते सः पापानि कुर्वंस्तत्सुकृतेन न लिप्यते । किं वेति शेषः । तत्सुकृतं परिभावयित्वा पापेन लिप्यत इति । भगवदवगमे सति पातकघातका अधीतवेदा इत्यन्तराशयः ।। ३ ।।

**नैनं सामान्यृचो वाऽपि यजूंषि च विचक्षणम् ।**
**त्रायन्ते कर्मणः पापान्नैतन्मिथ्या ब्रवीम्यहम् ।। ४ ।।**

**वादिराजीयम्–** एवं पृष्टः सनत्सुजातः उत्तरं वक्ति— **नेति । हे विचक्षण** धृतराष्ट्र! **एनम्** अध्ययनमात्रशीलपापकारिणं ब्राह्मणं सामानि वा, ऋचो यजूंषि वा **पापात्कर्मणः** तत्कृतपापकर्मणः सकाशात् न त्रायन्ते हि । वेदपाठजनितसुकृतस्य महापापहरत्वात् पापान्न त्रायन्त इति कथं सङ्गच्छते इति मा शङ्किथाः इत्युपदिशति– **नेति** । अहं **ते** तव अस्मिन्विषये, **मिथ्या** असत्यं न ब्रवीमीति । ऋगादीनां स्व-स्वावान्तरशाखाभेदविवक्षयाऽत्र बहुवचनोक्तिरिति ।। ४ ।।

**सत्यधर्मीयम्–** श्रीसनत्सुजातस्स्तावत्तानाक्षिपन्निव वक्ति– **नेति । एनं** स्वाधीतिनम् । सामानि, पूर्वमुत्पत्तिक्रममनुरुध्य ऋच उच्चारणं इदानीं सामग्रहणं प्राक् ''वेदानां सामवेदोऽस्मि'' इत्युक्तेर्युक्तम् । ''ऋचः श्रीरुमाद्याश्च साम्नः प्राणशिवादयः'' इति गीतातात्पर्योक्ताधि-कारिकाध्यक्षवाय्वभिमानिकतयेति ज्ञेयम् । पापात् कर्मणः कृतात् । **न**

**त्रायन्ते** पावनावने न कुर्वन्ति । हे विचक्षणेत्यनेन स्ववागकुत्सन-प्रोत्साहनं चकारेति ज्ञेयम् । त्वद्विषये अहं मिथ्या न ब्रवीमि ।। ४ ।।

**न छन्दांसि वृजिनं[१] तारयन्ति**
**मायाविनं मायया वर्तमानम् ।**
**छन्दांस्येनं[२] प्रजहत्यन्तकाले[३]**
**नीडं शकुन्ता इव जातपक्षाः ।। ५ ।।**

**वादिराजीयम्–** ननु तर्हि पठिता वेदाः पठितारं पापात्कर्मणो न त्रायन्ते चेत्तर्हि किं कुर्वन्तीत्याशङ्कायां "यस्तं न वेद किमृचा करिष्यति" इति श्रुतिबलात् मुख्यतः प्रतिपाद्यवस्तु ज्ञानार्थशून्यपाठमात्रनिष्टमोहाचारशील-मिथ्याज्ञानसम्पन्नदुष्टज्ञानब्राह्मणकृतपापपरिहारमकृत्वैव पुनरन्तकाले तं विहाय गच्छन्तीत्याह— **नेति** । नेत्यनेन अत्र छन्दांसीत्यनेन वर्णात्मकानां छन्दसां जडत्वात्तदुपलक्षितास्तच्छब्दवाच्यास्तदभिमानिनो देवा एव ग्राह्याः । **छन्दांसि** ऋगादीनामभिमानिनो तन्नामानो देवाः **मायाविनं** मिथ्याज्ञानिनं, धर्मध्वजिनं वा, **मायया** वेदार्थानभिज्ञया स्वप्रज्ञया **वर्तमानं** कर्मसु प्रवर्तमानं ब्राह्मणं **वृजिनात्** पापात् न तारयन्ति तत्कृतनरकादिभ्य इति शेषः । अपितु **अन्तकाले** मरणकाले तं पापिनं ब्राह्मणं तन्निष्ठस्वाभिप्रेतापरिज्ञानकृतकोपात् **प्रजहन्ति तं** परित्यज्यान्यत्र गच्छन्ति । तत्र दृष्टान्तमाह– **नीडमिति** । **जातपक्षाः** उत्पन्नपक्षाः **शकुन्ताः** पक्षिणः **नीडमिव** स्वोत्पत्तिस्थानमिव । अनेन वेदार्थानुसन्धानज्ञानहीनवेदपाठसम्पत्तिसम्पन्नस्य ब्राह्मणस्य स्वपठित-वेदजनितसुकृतेन स्वाचरितदुष्कृतप्राप्तनरकाद्यनर्थनिवृत्तिर्नास्तीति निरणायीति ।। ५ ।।

---

१. वृजिनादिति पाठान्तरम् । २. छन्दांसि तमिति पाठान्तरम् । ३. तृतीयचतुर्थपादयोः पौर्वपर्ये व्यत्यस्तिरस्ति पाठान्तरे ।

**सत्यधर्मीयम्–** का दशा तद्भाविनीत्यत आह– **नेति । वृजिनं** तत्कर्तारं अर्शआद्यजन्तः शब्दः । "वृजिनं व्रजिनं दुःखमकं तोद इतीर्यते, व्रजिनं वृजिनं दुःखे क्लेशे बाधति चोच्यते" इत्यनुव्याख्यान-बृहद्भाष्योक्तेः । **मायाविनं** अस्मायेति विनिः कपटवृत्तिम् । उपलक्षण-मिदमित्याह– **मायया कापट्येन वर्तमानमिति ।** छन्दांस्यधीतानि न तारयन्ति । पारं संसारपारावारस्य न प्रापयन्ति । किञ्च अन्तकाले **शकुन्ताः** पक्षिणो जातपक्षा **नीडं** स्वावासकुटीमिव । एनं **प्रजहति** त्यजन्ति च । छन्दांसीत्येकदोदितस्य सम्भवदन्ययत्वेऽपि यत्पुनः स्वच्छन्दतश्छन्दांसीत्यवादीत्तेनैकदाऽभिमन्यमानग्रहो ग्रह एकदा महत-श्चतुर्मुखादित्यादाविवाभिमानिनामित्यसूचयत्तेन च कथमचेतनानां छन्दसां त्यागयोग इति च पराचकारेति मन्तव्यम् ।। ५ ।।

**धृतराष्ट्र उवाच–**

**नचेद्वेदा वेदविदं त्रातुं शक्ता विचक्षण ।**
**अथ कस्मात्प्रलापोऽयं ब्राह्मणानां सनातनः ।। ६ ।।**

**वादिराजीयम्–** ननु यदि अध्ययनादिना ब्राह्मण्यापादकानां वेदानां स्वाध्येतृब्राह्मणकृतपापपरिहारसामर्थ्याभावेनापुरुषार्थहेतुत्वाद्वेदपाठस्यारण्य-रोदनवद्वैयर्थ्यं स्याच्चेत्तर्हि किमर्थं ब्राह्मणैर्निरर्थकवेदपाठायासः क्रियते ? इति शङ्कते धृतराष्ट्रः— **न चेदित्यनेन । हे विचक्षण** विशेषेण चक्षते प्रेक्षते भगवन्तमिति विचक्षणः, विशेषज्ञानसम्पन्नसनत्सुजात! **वेदाः** ऋगादयो वेदाः **वेदविदं** वेदपाठमात्रज्ञानसम्पन्नं ब्राह्मणं **त्रातुं** नरकादिभ्यस्त्रातुं न शक्ताश्चेत्, अथ तर्हि **अयं सनातनः** अनादितः प्राप्तः ब्राह्मणानां **प्रलापः** अरण्य-रोदनवद्वेदविषयको वृथापाठरूपो वाग्व्यवहारः **कस्मात्** कस्माद्धेतोः क्रियते ? इति ।। ६ ।।

**सत्यधर्मीयम्**– धृतराष्ट्रस्तर्हि गर्हिताः किल मदुपदेशका इत्याक्रोशतो वक्ति– **न चेदिति** । वेदाः **वेदविदं** स्वलाभवन्तं सामान्यज्ञानिनं वा त्रातुं शक्ता नचेत् **अथ** तर्हि **ब्राह्मणानां** वेदज्ञानां **सनातनः प्रलापः** वेदोऽध्येतव्य इत्यनर्थकवचनं **कस्मात्** किं निमित्तः । वेदानां पापपरिहारकत्वाभावे उपनयनानन्तरं नियमेन वेदाध्ययनं कार्यमित्युपदेशो निरर्थक इति भावः ।। ६ ।।

**सनत्सुजात उवाच–**

> **तस्यैव नामादिविशेषरूपै-**
> **रिदं जगद्भाति महानुभाव ।**
> **निर्दिश्य सम्यक् प्रवदन्ति वेदा-**
> **स्तद्विश्ववैरूप्यमुदाहरन्ति ।। ७ ।।**

**वादिराजीयम्**– भवेदेतदेवं यदि वेदपाठस्यारण्यरोदनवत्सर्वथा निरर्थकत्वमेवोपपाद्यतेऽस्माभिरिति चेन्न तथा, किन्तु ''अत्मन आकाशः सम्भूतः'' ''यतो वा इमानि भूतानि जायन्ते'' ''जन्माद्यस्य यतः'' इत्यादिभिः साकल्येन भगवत एव जगज्जन्मादिकारणत्वप्रतिपादकानां ऋगादिकानां सर्वेषां वेदानां, भगवति समन्वयानुसन्धानज्ञानपूर्वकपाठस्यानादित एव शिष्टपरिगृहीतत्वात्तत्पाठस्य सार्थक्योपपत्तेश्च सिद्धत्वादज्ञानपूर्वकानुष्ठानस्यैव वैयर्थ्यस्योदितत्वात्, न सर्वथा वेदपाठस्य वैयर्थ्यमित्युपदिशन् सनत्सुजातमुनिरादौ भगवत्परसर्वाभिप्रेतार्थमनुवदति– **तस्यैवेति** । **वेदाः** सर्ववेदाः **तस्यैव** मूलरूपस्यैव विष्णोः **नामादिविशेषरूपैः** नामादयो वासुदेवादयस्त एव विशेषबलाद्भेदवत्वेन रूप्यन्ते निरूप्यन्त इति तथा तैः । यद्वा– नामादयो आनन्दादयो गुणाः, विशेषाकारेण रूप्यन्ते निरूप्यन्ते येषु वासुदेवादिरूपेषु, तैरवतारविशेषैरिति वा, **निर्दिश्य** वासुदेवाद्यनन्त-

रूपैरित्येवं निर्दिश्य **इदं** प्रत्यक्षादिसिद्धं **जगद्भाति** सृष्ट्यादिकाले उत्पाद्यत्वादिना प्रकाशत इति **सम्यक्** निस्संशयतया **प्रवदन्ति** "स इदं सर्वमसृजत" इत्यादिना प्रवदन्ति । तत्तस्मान्नानारूपैः स्वातन्त्र्येण जगत्सृष्ट्यादिकर्तृत्वादिहेतोस्त एव वेदाः **विश्ववैरूप्यं** जगद्वैलक्षण्यं भगवति **उदाहरन्ति** वदन्ति । महानुभावेति धृतराष्ट्रसम्बुद्धिः । महति भगवति अनु आनुपूर्वेण भावो भक्तिर्यस्य स तथा ।। ७ ।।

**सत्यधर्मीयम्–** सनत्सुजातः स्वाशयं प्रकटयंत्समाधिमभिधत्ते – **तस्यैवेति** । परब्रह्मण एव । नामानि आदयो येषां रूपादीनां ते नामादयः तेचते विशेषाश्च व्यावर्तकाधर्माश्च नामादिविशेषाः तान् रूपयन्ति प्रतिपादयन्तीति तथा तैः । भगवान्नामरूपादिप्रतिपादकैरपि वेदैरिदं **जगद्भाति** प्रकाशते । नन्वेतद्विरुद्धमिति चेन्न । समाकर्षादित्युक्तन्यायेन परममुख्यया वृत्या भगवत्परैरपि वेदैर्मुख्यया वृत्या जगदप्यभिधीयते इति भावः । वेदा यस्माज्जगत्तदधीनसत्ताकं तस्मात्तत्वेन **निर्दिश्य** "पुरुष एवेदं सर्वं" "सर्वं खल्विदं ब्रह्म" इत्यादिना निरूप्य सम्यक् **प्रवदन्ति** "अयमात्मा नेति नेति" इत्यादिना तद्विलक्षणत्वेन च वदन्ति । तस्माज्ज्ञानिनोऽपि **तत्** ब्रह्म विश्वं च विश्ववैरूप्यं च विश्वस्माद्वैरूप्यं यस्य तच्च उदाहरन्ति । अनेन वेदानां मुख्यतो भगवत्प्रतिपादकतया ज्ञातानामेवोक्तपापपरिहारकत्वं न तु धर्मादिमात्रप्रतिपादकतया ज्ञातानां तथात्वम् । "वेदः कृत्स्नोऽधिगन्तव्यः" इत्यादि ज्ञानिप्रवादस्तु तादृशवेदाध्ययनपरः । "ऋचो यजूंषि" इत्यादि मदुक्तिस्तु भगवत्प्रतिपादनाननुसंहितवेदपरेति भावः सूचितो बोध्यः । आहच पराशरः "तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम् । तद्विश्वरूपवैरूप्यलक्षणं परमात्मनः " इति ।। ७ ।।

**तदर्थमुक्तं तप एतदिज्या**
**ताभ्यामसौ पुण्यमुपैति विद्वान् ।**
**पुण्येन पापं विनिहत्य पश्चात्**
**स जायते ज्ञानविदीपितात्मा ।। ८ ।।**

**वादिराजीयम्–** सर्ववेत्ता सनत्सुजातमुनिर्भगवदनुसन्धान-विशिष्ट-भावनयाऽधीतानामेव वेदानां सार्थक्यमिति संसाध्याधुना नित्यनैमित्तिकादिभेदेन "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते"[१] इत्यादि वेदविहितानां ब्राह्मणादि-भिरनुष्ठेयानां सर्वेषां कर्मणामन्तःकरणशुद्धिद्वारा भगवदपरोक्षज्ञानहेतुत्वा-त्परम्परया मोक्षसाधनत्वमिति वदति– **तदर्थमिति । एतत्** ज्ञानिभि-राचर्यमाणं **तपः** उपवासादिरूपं तपः **इज्या च** अग्निहोत्रादिरूपा यजनक्रिया च **तदर्थं** भगवत्प्रीत्यर्थमिति **उक्तं** वेदेषु प्रतिपादितम् । **ताभ्यां** भगव-त्प्रीतिसाधनीभूताभ्यां वेदविहिततपोयज्ञाभ्यां **असौ** साधको विद्वान् 'कर्मणा ज्ञानमातनोति' इति प्रमाणबलात् **पुण्यं** पुनं पावित्र्यापादकं यं ज्ञानम् **उपैति** प्राप्नोति । प्रसिद्धपुण्यं चोपैति । **पुण्येन** भगवत्प्रीत्यापादकवेदविहित-कर्मानुष्ठानकृतशुद्धान्तःकरणजनितपरोक्षापरोक्षरूपपुण्यशब्दवाच्यपवित्रज्ञानेन **पापं** परोक्षापरोक्षदशायामार्जितं स्वपापं **विनिहत्य** अश्लेषविनाशभावेन संहत्य **पश्चात्** सर्वपापक्षयानन्तरं **सः** अधिकारी **ज्ञानविदीपितात्मा** ज्ञानेन निर्दुष्टापरोक्षज्ञानेन विदीपितः प्रकाशितः आत्मा स्वरूपाख्यः यस्यासौ तथोक्तः **जायते** भवति । "आत्मा (प्राणे) देहे धृतौ जीवे स्वभावे परमात्मनि" इत्यभिधानम् । अनेन वेदविहितनिष्काम्यकर्मानुष्ठानद्वारा शुद्धान्तःकरणस्याधिकारिणो अपरोक्षप्राप्तिरिति ।। ८ ।।

---

१. (गीता ५.३८) ।

**सत्यधर्मीयम्–** तपआदिकं चार्पितं चेद्धरौ सार्थकं चैतदर्थप्रतिपादकं वेदादिकमिति वक्ति । **तदर्थमिति** । एतत्तपः इयमिज्या जात्येकवचनम् । **असौ** अधिकारी **ताभ्यां** तपइज्याभ्यां अनुष्ठिताभ्यां पुण्यम् । **विद्वान्** ज्ञानी उपैति । तदार्जितपुण्येन **पापं** स्वाचरितं किञ्चिद्दुश्चरितपापं विनिहत्य । यथेत्यस्यापरोक्षज्ञानप्रतिबन्धकं न स्यात्तथोपमर्द्य पश्चादिति ल्यप्प्रत्ययस्य मतान्तरे चोत्तरकाल परत्वमपि दृष्टमिति सार्थकम् । पुण्यमुपैति पश्चात्तेन पापं विनिहत्येत्यन्वयो वा । ज्ञानेनापरोक्षात्मना विदीपितो विषयीकृत आत्मा हरिर्येन स जायते । पापहेतुहतेः पुनर्नतदं कुरूणमित्याह– **अज्ञानविदीपितात्मेति** । अज्ञानं विदीपितं दग्धं भस्मीकृतं येन स तादृश आत्मा मनो यस्य स इति ॥ ८ ॥

**ज्ञानेन चात्मानमुपैति विद्वान्**
**य[१]थान्यथा वर्गफलानुकाङ्क्षी ।**
**अस्मिन् कृतं तत्परिगृह्य सर्वं**
**अमुत्र भुङ्क्ते पुनरेति मार्गम् ॥ ९ ॥**

**वादिराजीयम्–** एवंविधसाधनप्राप्तज्ञानविदीपितात्मनोऽधिकारिण-स्तदनन्तरं प्राप्यस्वान्तर्यामिभगवद्रूपापरोक्षाख्यमहाफलमाह— **ज्ञानेनेति** । **विद्वान्** स ज्ञानी **ज्ञानेन** यथायोग्यस्वबिम्बापरोक्षज्ञानेन **आत्मानं** स्वान्तर्यामिणं भगवन्तं **उपैति** प्राप्नोति । तथा स्वयोग्यतामनतिक्रम्य अनन्तरं नित्यमुक्तो भवतीत्यर्थः । **अन्यथा** सर्वेषां वेदानां, वेदोदितानां कर्मणां च, भगवदर्पणान्यथाभूतविपरीतानुष्ठानेन **वर्गफलानुकाङ्क्षी** वर्गो विषयवर्गः इन्द्रिय-वर्गो वा, तेषां फलं सुखं (तत्साधनं देहगेहादि,) अनु प्रतिक्षणं काङ्क्षत इति स तथोक्तः । स कामी पुरुष इत्यर्थः । **अस्मिन्** मनुष्यलोके **कृतं**

१. अथेति पाठान्तरम् ।

सकामनयाऽऽचरितं **तत्** पुण्याख्यकर्म **परिगृह्य** गृहीत्वा **अमुत्र** स्वर्गादिशब्दवाच्ये परलोके **सर्वं** समग्रं **भुङ्क्ते** अनुभवति, काम्यपुण्यजनितसुखमिति शेषः । **पुनः** पुण्यक्षयानन्तरं **मार्गं** मनुष्यलोकमार्गं **एति** आगतो भवति । ''ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति'' इत्येतन्मानम् ।। ९ ।।

**सत्यधर्मीयम्–** **विद्वान्** ज्ञानी **ज्ञानेन** अपरोक्षात्मकेन **आत्मानं** परमात्मानं उपैति । तथा अन्यथा ईश्वरार्पणबुध्या कर्मानुष्टानवर्गस्येन्द्रियवर्गस्य यत्फलं स्वर्गादिसुखं तदनुकाङ्क्षी सन् **अस्मिन्** नृलोके कृतं **तत्** सुकृतं परिगृह्य **अमुत्र** स्वर्गे भुङ्क्ते भुक्त्वाच पुनः **मार्गं** संसारमार्गं एति । ''तमेवं विद्वानमृत इह भवति'' इति श्रुतेः । ''तस्मिन्यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनरावर्तते'' इति च । ''ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति'' इत्यादिस्मृतेश्च ।। ९ ।।

**अस्मिन् लोके तपस्तप्तं फलमन्यत्र भुज्यते ।**
**ब्राह्मणानां तपस्त्वृद्धमन्येषां तावदेव तत् ।। १० ।।**

**वादिराजीयम्–** ननु तर्हि प्रवृत्तिनिवृत्तिकर्मणोरामुष्मिकफलसाम्यात्किमित्यत्यायाससाध्यनिवृत्तिधर्मानुष्ठानस्यैवावश्यकत्वमिति चेन्न, कर्मणः तत्तदधिकारिकृतकाम्यादिभेदेनामुष्मिकनश्वरानश्वरफलदातृत्वनियमादनश्वरफलदानसमर्थनिवृत्तिधर्मानुष्ठानस्यैवावश्यविधेयत्वमुपदिशन्नादौ तावदधिकारिद्वैविध्यं तदीयपुण्यलक्षणं तत्फलवैलक्षण्यं चोपदिशति– **अस्मिन्निति । अस्मिन्** लोके कर्मभूमौ तपः । तप इत्युपलक्षणं, यागादिकर्म तप्तं चेत् **फलं** तज्जं फलम् **अन्यत्र** परलोके **भुज्यते** अनुभूयते ।

ननु ''अस्मिँल्लोके तपस्तप्तं फलमन्यत्र भुज्यते'' इत्येतत्सकाम-निष्कामभेदेन विविधानामप्यधिकारिणां समानमेव किं विशिष्योच्यते निष्कामाधिकारिणामाधिक्यमित्यतस्तदुपपादयति— **ब्राह्मणानामिति** । **ब्राह्मणानां** ब्रह्मण्येव अणन्ते दर्शनस्पर्शनादिना चेष्टावन्तो भवन्ति इति ब्राह्मणाः । ''अण चेष्टायामि''ति धातुः । तेषां सम्बन्धीति शेषः। **तपः** यागादिरूपं तपः **ऋद्धं तु** समृद्धमेव भवति । तुना सूचितोऽयमर्थः– अनुष्ठानकाल एव अनंतं सत् मुक्तिदशायाम् उक्तफलादप्यधिकफलदम् । **अन्येषां** ब्रह्मज्ञानहीनानां **तत्** तदेव तपआदिकं तावदेव यस्य कर्मणः परलोके यावत्फलमुक्तं तावदेव, नाधिकं भवति । अत्र ''यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति'' इति श्रुतिसिद्धोऽयमर्थ इति । अनेन ज्ञान्याचरितस्यैव कर्मणः महाफलदातृत्वमिति सिद्धम् ।। १० ।।

**सत्यधर्मीयम्–** ज्ञानिकृतकर्मणोऽतिशयमाह– **अस्मिन्निति** । यत्तपस्तप्तं तस्य फलं **अन्यत्र** परलोके भुज्यत इति ज्ञानिनोऽज्ञानिनश्च समम् । तत्र **ब्राह्मणानां** ब्रह्मज्ञानिनां **तपस्तु** तदादिकर्म **ऋद्धं** समृद्धं भवति अक्षयफलकमिति यावत् । **अन्येषां** भगवज्ज्ञानरहितानां तत्कर्म तावदेव यस्य कर्मणा श्रुतौ तत्फलं श्रुतं तावदेव तदपि क्षयिष्णु । तथाच श्रुतिः– ''विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति'' इति । ''ताद्धास्यान्ततः क्षीयते'' इति च ।। १० ।।

**धृतराष्ट्र उवाच–**

**समृद्धमसमृद्धं[१] च तपो भवति केवलम् ।**
**सनत्सुजात तद्ब्रूहि कथं विद्या[२]महं विभो ।। ११ ।।**

---

१. कथं समृद्धमप्यृद्धमिति पाठान्तरम् । २. विन्द्यामिति पठान्तरम् ।

**वादिराजीयम्–** ''ब्राह्मणानां तपस्त्वृद्धं'' इत्यनेन ज्ञान्याचरितानामेव तपआदीनां परलोके फलातिशयत्वमिति श्रुत्वा यथोक्तविधिनाऽनुष्ठितानामेव तपआदीनां ऋद्धत्वात्पुनरपि तेषामेव केवलं समृद्धत्वं कथमिति धृतराष्ट्रः पृच्छतीत्याह– **कथमिति । हे सनत्सुजात ऋद्धं** उक्तविधिनाऽनुष्ठितेन कर्मणा अतिशयतां प्राप्तमपि **तपः** तदेव तपः पुनः **केवलं समृद्धं कथं** केन प्रकारेण भवतीति शेषः । **विभो** प्रश्नार्थप्रवचनसमर्थ सनत्सुजात! अहं **तत्** एकस्यैव तपसः ऋद्धत्वं, केवलसमृद्धत्वं च, **कथं** केन प्रकारेण विन्द्यां जानीयां, तथा ब्रूहि इति धृतराष्ट्रः पृष्टवानिति ।। ११ ।।

**सत्यधर्मीयम्–** केवलं तपोऽभीष्टसाधनमिति तत्तन्मुखतः श्रुतकेवल-तपोमाहात्म्यो राजा पृच्छति– **कथमिति ।** समृद्धं असमृद्धं च । तपः केवलं तथा व्यवहारगोचरः कथं केन प्रकारेण भवति । **हे विभो** कीर्तिव्याप्त सनत्सुजात तदेतच्चाहं केन प्रकारेण **विद्यां** जानीयां तथा **ब्रूहि** सम्यक् बोधयेति भावः ।। ११ ।।

**सनत्सुजात उवाच–**

**निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते ।**
**एतत्समृद्धमसमृद्धं[१] तपो भवति नान्यथा ।। १२ ।।**

**वादिराजीयम्–** उक्तविधिनाऽनुष्ठितस्य तपसः किं तत्केवलत्वमिति पृष्टः सनत्सुजातः ''आमयोऽयं हि भूतानां जायते येन सुव्रत । तदेव ह्यामयद्रव्यं तत्पुनाति चिकित्सितम्'' इत्यादावुक्तस्यैकस्यैवामयकारकस्य कदल्यादिद्रव्यस्य द्रव्यान्तरसंयोगेनातिशयत्वप्राप्त्या यथा आमयनिवर्तकत्वेन महाफलप्रदत्वं दृष्टचरं, तथैवात्रापि साङ्गोपाङ्गतयाऽनुष्ठिततपआदिकर्मणां उक्तस्वर्गादिनश्वर-

१. एतत् समृद्धमप्यृद्धमिति पाठान्तरम् ।

फलप्रदत्वेनानर्थप्रदत्वस्य सत्वेऽपि तेषामेव भगवदनुसन्धानाख्यद्रव्यान्तर-संयोगेन अनश्वरफलप्रदज्ञानसाधनीभूतत्त्वात्तेषामेव केवलसमृद्धत्वमित्युपदिशन्नादौ स्वोक्तदृढीकरणाय ज्ञानिजनसम्मत्यनुवादमुखेन तच्छङ्कामपनुदति– **निष्कल्मषमिति । एतत्** अस्मद्विषयीभूतमीदृक् **तपः निष्कल्मषं तु** वक्ष्यमाणकल्मषरहितमेव । 'तु' इत्यनेन तदेव केवलं समृद्धमिति परिचक्षते ज्ञानिन इति शेषः । एतदपि भगवदनुसन्धानहीनविषयरागान्वितज्ञानसम्पृक्तं यथाविध्यनुष्ठितमपि तपः ऋद्धमिति परिचक्षते इति पूर्वेणान्वयः । अपीत्यनेन केवलं समृद्धमिति नोच्यत इत्यपि च वक्ष्यमाणत्वात् । कुत इति चेत् **नान्यथेति । अन्यथा** विधिना स्वानुष्ठानजनितसुकृतजन्यक्लृप्तफलस्यातिशय-करणाख्यान्यथाभावकरणाय **न भवति** समर्थं न भवतीत्यर्थः ।। १२ ।।

**सत्यधर्मीयम्–** उत्तरमाह– **निष्कल्मषमिति । एतत्** सर्वैः क्रियमाणं तपो **निष्कल्मषं** वक्ष्यमाणक्रोधादिकल्मषहीनं चेत्तर्हि **केवलं** परिपूर्णं बीजरूपं सर्वकार्यजनकमिति यावत् । मुख्यं वा परिचक्षते ज्ञानिनः । ''केवलो ज्ञानिभेदः स्यात्केवलस्त्वेककृत्स्नयोः । निर्णीते केवलम्'' इति ''त्रिलिङ्गं त्वेककृत्स्नयोः'' इति चामरौ । ''केवलं बीज-मित्युक्तम्'' इत्यभियुक्तोक्तेश्च । एतदेव निष्कल्मषं तपः केवलशब्दवाच्यं समृद्धं भवति । **अन्यथा** निष्कल्मषत्वाभावे समृद्धं न भवति । किं तु असमृद्धं भवति । एतत्केवलत्वाभिप्रायेणैव मया ब्राह्मणानां ब्रह्मज्ञानिनां तपस्त्वृद्धमित्युक्तम् । अभिधानमभिहितम् ।। १२ ।।

**तपोमूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय ।**
**तपसा वेदविद्वांसः परेत्यामृतमाप्नुयुः ।। १३ ।।**

**वादिराजीयम्–** एवमेकस्यैव तपसो द्वैविध्यापादकक्रियाविशेष-मभिधायेदानीमैहिकामुष्मिकसमस्तफलापादकं तप एवेति तपस्तौति–

**तपोमूलमिति** । हे क्षत्रिय! **इदं सर्वं** प्रत्यक्षाप्रत्यक्षविषयमैहिकामुष्मिकम् अनेकविधं सुखं **यत्** यथा प्राप्यत इति मां यत्पृच्छसि तत्सर्वं **तपोमूलं** तपोबीजं तपःकारणमिति विद्धीत्यर्थः ।। ''तपसैव सर्वं विन्दन्ते'' इत्यत्र ''तस्मात्तपसि रमन्ते'' इत्याद्युपनिषत्सिद्धविद्वत्समाख्यामाह– **तपसेति** । **विद्वांसः** विशेषेण जानन्तीति विद्वांसः ज्ञानिनः **तपसा** स्वानुष्ठिततपः-कारणकश्रेयसा **परेत्य** लिङ्गभङ्गाख्यमरणं प्राप्य **अमृतं** ''अमृतं क्षेममभयम्'' इति श्रीमद्भागवतप्रमाणानुसारेण अमृतशब्दवाच्यं वैकुण्ठाख्यं भगवन्तं, वैकुण्ठलोकं च **आप्नुयुः** प्राप्नुवन् । अनेन मोक्षप्रदभगवत्प्राप्तिर्मोक्षप्राप्तिश्च तपसैवेति निरणायि ।। १३ ।।

**सत्यधर्मीयम्–** तत्प्राधान्यबीजत्वादिकमुपपादयति– **तपोमूल-मित्यादिना** ।। इदं सर्वकार्यजातम् । **परेत्य** मृत्वा **अमृतं** मोक्षम् ।। १३ ।।

**धृतराष्ट्र उवाच–**

**कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः ।**
**सनत्सुजात येनेदं विद्यां[1] गुह्यं सनातनम् ।। १४ ।।**

**वादिराजीयम्–** एवं सनत्सुजातमुखात् ज्ञातनिष्कल्मष-केवल-समृद्धतपोविभवोऽपि धृतराष्ट्रः तपसः कल्मषाज्ञानेन पुनरपि तं पृच्छति— **कल्मषमिति** । **हे सनत्सुजात!** मुने! मया त्वन्मुखात् **निष्कल्मषं** निर्दुष्टं **तपः** तपसो लक्षणं श्रुतम् । तपसः कल्मषं न श्रुतं तपसः कल्मषं किन्तत् ब्रूहि । **येन** निष्कल्मषेण चीर्णेन तपसा **गुह्यं** गोप्यं सनातनं, ब्रह्मेति शेषः, विन्द्याम् अहञ्जानीयाम् । फलितार्थस्तु–यतो निष्कल्मषेणैव तपसा ब्रह्मा-परोक्षज्ञानमतस्तपसः कल्मषज्ञानाभावे निष्कल्मषकेवलतपसोऽनुष्ठानानुपपत्तेः

१. विन्द्यामिति पाठान्तरम् ।

तपसः कल्मषज्ञानमावश्यकमिति हेतोस्तपसः कल्मषं ब्रूहि इत्यभिप्रायः ।। १४ ।।

**सत्यधर्मीयम्–** ''निष्कल्मषं तपश्चैतत्केवलं परिचक्षते'' इत्युक्तनिष्कल्मषत्वस्य कल्मषपदार्थज्ञानाधीनज्ञानत्वेन तं पृच्छति– **कल्मषमिति** ।। निष्कल्मषं तपस्त्वत्तः श्रुतम् । तस्य तपसः कल्मषं ब्रूहि येन निष्कल्मषेन तपसा **इदं** हृदयसंनिहितं गुह्यं सनातनं ब्रह्मविद्या तत्तु श्रुतमिति पूर्वेणान्वयः ।। १४ ।।

**सनत्सुजात उवाच–**

**क्रोधादयो द्वादश यस्य दोषा-**
**स्तथा नृशंसानि च सप्त राजन् ।**
**ज्ञानादयो द्वादश चातताना:**
**शास्त्रे गुणा ये विदिता द्विजानाम् ।। १५ ।।**

**वादिराजीयम्–** एवं धृतराष्ट्रेण पृष्टः सनत्सुजातः भगवदनुसन्धानहीनतपसो बहून्दोषाननुवदति— **क्रोधादय इति । यस्य** तपसः क्रोधादयः द्वादशसङ्ख्याः कल्मषाः **तथा** यथा क्रोधादयो बहवो दोषास्तद्वत्तपस एव नृशंसबाहुल्यमप्यस्तीत्यस्मिन्नर्थे 'तथे'ति शब्दः । तथा नृशंसानि सप्तसङ्ख्येति शेषः । सप्त चेति 'च'शब्दस्समुच्चये । पुनर्वक्ष्यमाणैरन्यैः षड्भिःनृशंसै सहेति सम्बन्धः। एवं त्रयोदश नृशंसानीति । ज्ञानादयः सङ्ख्या द्वादश गुणाः आततानाः तस्यैव तपसः **आततानाः** सम्यग्विस्तारकरणपटवः । ''तनु विस्तार'' इति धातुः । एवंविधाः **द्विजानां** ब्राह्मणानां **गुणाः** तन्निष्ठधर्माः इति **शास्त्रे** धर्मशास्त्रे **विदिताः** प्रतिपादिताः **ये** ज्ञानादयस्ते तपसः अतिशयापादका इति आतताना इत्यनेनैव सम्बन्धः ।। १५ ।।

**सत्यधर्मीयम्– यस्य** तपसः क्रोधादय उक्ता द्वादश यस्य तपसो **दोषाः** कल्मषाः तथा षट् नृशंसा विकत्थनादय इत्यपि ग्राह्यम् । सप्त नृशंसाः सम्भोगसंविदादयो वक्ष्यमाणाश्च तथाभूताः यथा यस्य गुणाः ज्ञानादयो द्वादश आततानाः विस्तार्यमाणा ये च शास्त्रे द्विजातीनां विदितास्तान् वक्ष्यामीति शेषः ।। १५ ।।

**क्रोधः कामो लोभमोहौ विवित्साऽ-**
**क्षमा[1]ऽसूया मानशोकौ स्पृहा च ।**
**ईर्ष्या जुगुप्साच महागुणेन**
**सदा वर्ज्या द्वादशैते नरेण ।। १६ ।।**

**वादिराजीयम्–** 'क्रोधादयः' इति सम्बुद्धाकारेणोक्तानामसत्सेव्यानां द्वादशसङ्ख्याकानां क्रोधादीनां दोषाणां सतामसेव्यत्वज्ञापनायास्मिञ्छ्लोके तेषां नामान्याह— **क्रोध इत्यादिना । क्रोधः** कामादिहेतुकोऽन्तः-करणविक्षोभो गात्रस्वेददेहकम्पनादिनोत्थभ्रुकुटी-करणादिलिङ्गः, ताडनादि-निमित्तमनोवृत्तिविशेषो वा ।। १ ।। **कामः** स्त्र्याद्यभिलाषः ।। २ ।। **लोभः** सत्यां शक्तौ, सत्पात्रे स्वद्रव्याप्रतिपादनं, 'लुभ गार्ध्ये' इति धातुः ।। ३ ।। **मोहः** कृत्याकृत्यशून्यता, स्वहिताज्ञानं वा ।। ४ ।। **विवित्सा** विविधैरुपायैर्विशेषेण विषयान्वेषणेच्छा ।। ५ ।। **अकृपा** निष्ठुरता, दयाशून्यता वा ।। ६ ।। **असूया** सतां गुणेषु दोषाविष्करणं, परगुणेष्व-सहिष्णुता वा ।। ७ ।। **मानं** स्वात्मनि महत्वज्ञानम् ।। ८ ।। **शोकः** गतानुस्मरणजन्यदुःखविशेषः ।। ९ ।। **स्पृहा** विषयेच्छारूपतृष्णा ।। १० ।। **ईर्ष्या** परश्रियामसहिष्णुता ।। ११ ।। **जुगुप्सा च** बीभत्सा, परगुणा-च्छादनेच्छा वा ।। १२ ।। एते द्वादश क्रोधादयो दोषाः तपसः कल्मष-

१. अकृपेति पाठान्तरम् ।

रूपाः **सदा** यावज्जीवं **महागुणेन नरेण** ब्रह्मज्ञानिना, ब्राह्मणेनेति शेषः । ब्राह्मणस्य महागुणित्वं नाम "महद्ब्रह्मेति यत्प्रोक्तं महत्वान्महतामपि । तत्प्राप्तिगुणसंयुक्तो महागुण इति स्मृतः" इति मानम् । यद्वा ब्राह्मणानां महागुणित्वप्राप्तौ उक्तं च भगवद्गीतायां—(१८-४२) "शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्" इत्युक्तत्वात् । एवंविधगुणसम्पन्नेन ब्राह्मणेन **वर्ज्याः** त्याज्याः । तपआद्यनुष्ठानसमये एतेषामवश्यवर्ज्यत्वस्य कैमुत्यद्योतनाय 'सदे'त्युक्तिः ।। १६ ।।

**सत्यधर्मीयम्– क्रोधः** कामप्रतिघातादुत्पन्नस्ताडनाक्रोशनादिहेतुः । **कामः** स्त्र्याद्यभिलाषः । **लोभः** पदार्थस्नेहः । **मोहः** देहाभिमतिः । **विवित्सा** विषयरसानां वेदितुमिच्छा । **अक्षमा** परपरिभवासहनम् । **असूया** परगुणेषु दोषाविष्करणम् । **मानः** गर्वः । **शोकः** इष्टार्थवियोगजन्यश्चित्तविक्षोभः । **स्पृहा** परद्रव्येच्छा । **ईर्ष्या** परसंपादसहिष्णुता । **जुगुप्सा** परनिन्दा । महान्तो गुणा यस्य तेन । नरेण सदा वर्ज्याः ।। १६ ।।

**एकैकमेते राजेन्द्र मनुष्यं पर्युपासते ।**
**लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः ।। १७ ।।**

**वादिराजीयम्–** क्रोधादीनां सर्वदा त्याज्यत्वे को हेतुरित्याशङ्कायां यथा पान्थस्य कान्तारे सिंहव्याघ्रादयो मृगाः उपद्रवकराः तद्वत् "क्रोधाद्या दुःखदा नृणाम्" इत्यनेन क्रोधादीनां मोक्षमार्गपरिपन्थित्वेन महानर्थहेतुत्वात्तेषां त्याज्यत्वमिति सदृष्टान्तमाह– **एकैकमिति** । राजेन्द्र! **एते** क्रोधादयः **एकैकं** प्रत्येकशः एकं एकं **मनुष्यं** देहिनं **पर्युपासते** सर्वत्र देहं व्याप्य तिष्ठन्ति । तच्छिद्रान्वेषणपराः भूत्वेति शेषः । दृष्टान्तार्थपरतया

दार्ष्टन्तिकेऽपि शेषपूर्तिः । तत्र दृष्टान्तमाह– **लिप्समान इति । तेषां** स्वदृष्टिपथं प्राप्तानां **मृगाणां** हरिणादीनां **अन्तरं** प्रहर्तुमवकाशं वै **लिप्समानः** अपेक्षमाणः **लुब्धकः इव** मृगमारको व्याधः वृक्षादीनवलम्ब्य यथा **पर्युपासते** तिष्ठति तथेति ।। १७ ।।

**सत्यधर्मीयम्–** तेषां वर्ज्यत्वे निमित्तमाह – **एकैकमिति** ।। हे राजेन्द्र **एते** क्रोधादयः कल्मषाः एकैकं मनुष्यं प्रातिस्विकं **उपासते** आश्रयन्ति । **तेषां** दोषाणां **अन्तरं** छिद्रं लिप्समानं अस्मिन् समये एतद्गुणाश्रयणे एतद्दोषपराभवो भविष्यतीति तच्छिद्रं **लिप्समानः** अन्वेषमाणस्तपस्वी छिद्रं लब्ध्वा तान् हन्यादिति शेषः । मृगाणामन्तरं लब्ध्वा लुब्धको मृगयुर्यथा हंति तथेत्यर्थः ।। १७ ।।

**विकत्थनः स्पृहयालुर्मनीषी**[१]
**बिभ्रत् कोपं चपलो रक्षणश्च ।**
**एते प्राप्ताः षण्णरान्**[२] **पापधर्मान्**
**प्रकुर्वते नोत सन्तः सुदुर्गे ।। १८ ।।**

**वादिराजीयम्–** इदानीं क्रोधादिवत्तपसः कल्मषभूतानां पूर्वोक्तानां त्रयोदशनृशंसानामपि त्याज्यत्वमस्तीति ज्ञापनाय श्लोकद्वयेन तेषां नामान्याह **विकत्थमान इति । विकत्थमानः** असम्बद्धवाग्व्यवहारशीलः ।। १ ।। **स्पृहयालुः** विषयलोलुपः ।। २ ।। **मनस्वी** स्वेच्छाप्रवृत्तिमान् ।। ३ ।। **कोपं बिभ्रत्** सर्वदा कोपात्मकः ।। ४ ।। **चपलः** चञ्चलः ।। ५ ।। **अरक्षणः** स्वधर्मरक्षणशून्यः ।। ६ ।। एते षट् नृशंसाः **परान् पापधर्मान्** पापनिष्ठान्, तामसजीवानित्यर्थः । **प्राप्ताः** तन्निष्ठतां प्राप्ताः तेषामेव विषया

१. मनस्वीति पाठान्तरम् । २. षट् परान् इति पाठान्तरम् ।

इत्यभिप्रायः । नन्वत्र नृशंसादिदोषधर्मस्वरूपकथनमपहाय धर्मिस्वरूपकथनं क्वोपयुज्यत इति चेत्, 'पापधर्मान्प्राप्ताः' इत्यनेन तामसजीवानां तादात्म्य-ज्ञापनायोक्तमिति न विरोधः । न चेत् 'नोत सन्तः सुदुर्गे' इत्येतदनन्वितं स्यात् । **ये सन्तः** सात्विकजीवाः सज्जनपुरुषाः ते **सुदुर्गे** महापद्यपि **न प्रकुर्वते** विकत्थादीन्नाचरन्ति । 'उते'त्यनेन जीवानां तामससात्विकादि-भेदोऽप्यदर्शि ।। १८ ।।

**सत्यधर्मीयम्–** अप्रतिज्ञातांश्च कांश्चिदाह– **विकत्थन इति ।। विकत्थनः** आत्मश्लाधी । **स्पृहयालुः** ण्यन्तात्स्पृहेः स्पृहिगृहीत्यादि-नाऽऽलुच् । परधनेच्छास्वाभावः । **मनीषी** मनीषा अस्यास्तीति मनीषी । भूमनिन्देत्यादिना निन्दार्थे व्रीह्यादीन् कुबुद्धिरित्यर्थः । **कोपं बिभ्रत्** कोपी । **चपलः** अत्यन्तचपलचित्तः । **अरक्षणः** स्वपोष्य-रक्षणहीनः । **एते षट्** दोषरूपा इतरान् नरान् प्राप्ताः सन्तः तान् पापधर्मान् समासान्तविधेरनित्यत्वान्नानिच् । अर्शआद्यजन्तोवा । स्वसंनिधिमात्रेण तादृशान् प्रकुर्वते । इदमुत्तरत्राप्यन्वेति । उतेति तस्मादित्यर्थे । तस्मात्सन्तः **सुदुर्गे** परमापत्कालेऽपि एतान् दोषान् न प्रकुर्वते ।। १८ ।।

**सम्भोगसंविद्विषमेधमानो**[१]
**दत्तानुतापी कृपणोऽबलीयान् ।**
**वर्गप्रशंसी वनितां च द्वेष्टा**[२]
**एते परे सप्त नृशंसरूपाः ।। १९ ।।**

**वादिराजीयम्–** उर्वरितसप्तनृशंसस्वरूपमाह– **सम्भोगेति** । १) **सम्भोगसंवित्** सम्भोगे विषयानुभवविषये संवित् सम्यक् ज्ञानं यस्य सः ।

१. विषमेऽतिमानी इति पाठान्तरम् । २. वनिताविरोधीति पाठान्तरम् ।

२) **विषमेधमानः** विषमे वा पातहेतुत्वेन स्वनाशहेतुत्वान्मिथ्याप्रज्ञा तत्र मानः तत्प्रामाण्यापादकदुष्टप्रमाणसम्पन्नः । यद्वा मिथ्याज्ञाने प्रामाण्यज्ञानवान्वा । अथवा स्वोत्तमेषु विषं द्वेषं एधमानः वर्धमानः । ३) **दत्तानुतापी** सत्सु हिरण्यादि दत्वा पश्चात्तापकारी । ४) **कृपणः** अल्पलाभाय महान्तमपमानं सहमानः ५) अबलीयान् वबयोरभेदात् ''वा गतिगन्धनयो''रिति धातोः, गत्यर्थानां ज्ञानार्थत्वात् सच्छास्त्रीयज्ञानहीनः । ६) **वर्गप्रशंसी** वर्गस्य स्त्र्यादिविषयवर्गस्य प्रसंसी, स्तवनशीलः । ७) **वनिताविरोधी** वनितां पातिव्रत्यादिशीलसम्पन्नां, स्वस्त्रियमन्यां वा, विरुध्यत इति स तथा । **परे** पूर्वमुक्तेभ्यः अन्ये **एते** शृङ्गिग्राहकतया उक्ताः **सप्त** सप्तधा विभक्ताः **नृशंसरूपाः** नृशंसात्मकाः । अत्रापि धर्मस्वरूपकथनं परित्यज्य धर्मिस्वरूपकथनं पूर्ववदेवेति ज्ञेयम् । एवं त्रयोदश नृशंसानीति ।। १९ ।।

**सत्यधर्मीयम्–** प्रतिज्ञातनृशंससप्तकमाह– **सम्भोगसंविदिति** । सम्भोगे विषयानुभवे संविद्यस्य स तथा । विषं यथा तथा सदाऽपकारितया एधमानो वर्धमानः नित्यं परापकरणेऽत्यन्तोत्साहवानित्यभिप्रायः । विषमेऽतिमानीति पाठे मानानपेक्षणकाले तदपेक्षावानित्यर्थः । **दत्तानुतापी** दत्ते अनुतापः पश्चात्तापोऽस्यास्तीति तथा । **कृपणः** कदर्यः । **अवलीयान्** शारीरज्ञानोभयबलशून्यः । तस्यापि पुण्यकार्येऽपि योगितायाः छान्दोग्यादावुपपादितत्वात् । **वर्गप्रशंसी** इन्द्रियवर्गस्तोता । तत्पोषक इति यावत् । वनितां च द्वेष्टा । अनन्यशरणायास्तस्याः मान्यतायाः सर्वस्मृत्युक्तत्वेन तद्वेषस्यात्यन्तानुचितत्वादिति भावः । **परे** पूर्वोक्तषड्भ्यः ।। १९ ।।

**ज्ञानं च सत्यं च दमः श्रुतं च**
**ह्यमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।**
**यज्ञश्च दानं च धृतिः शमश्च**
**महाव्रता द्वादश ब्राह्मणस्य ।। २० ।।**

**वादिराजीयम्–** एवं स्वनुष्ठितस्यापि तपसो ह्रासकारिणां क्रोधादीनां स्वरूपमभिधायेधानीं ''ज्ञानादयो द्वादश चाततानाः'' इति पूर्वोक्तानां स्वनुष्ठितस्यैव तपसः केवलसमृद्धित्वप्रकाशकानां सन्निष्ठधर्माणां द्वादश-सङ्ख्याकानां ज्ञानादीनां स्वरूपकथनपूर्वकं तेषां नामानि निर्दिशति— **ज्ञानमिति । ज्ञानं** परापरतत्वविषयं । **सत्यं** यथार्थभाषणं, भूतहितं वा । **दमः** इन्द्रियनिग्रहः । **श्रुतं** भारतादिमहाशास्त्रश्रवणं । **अमात्सर्यं** गुणिषु स्वोत्तमेषु स्नेहः । **ह्रीः** निषिद्धाचरणे लज्जा । **तितिक्षा** द्वन्द्वसहिष्णुता । **अनसूया** महात्मसु दोषानाविष्करणं । **यज्ञः** नित्यमनुष्ठीयमानो ब्रह्मयज्ञादिः, ज्योतिष्टोमादिर्वा । **दानं** सत्पात्रे द्रव्यत्यागः । **धृतिः** विषयसन्निधा-विन्द्रियनिग्रहशक्तिः । **शमः** भगवन्निष्टबुद्धिमत्वं । एते द्वादश ब्राह्मण-स्याधिकारिब्राह्मणस्य महाव्रताः । लिङ्गव्यत्ययः छान्दसत्वान्न दोषाय, मोक्षापादकज्ञानसाधनानि व्रतानि ।। २० ।।

**सत्यधर्मीयम्–** ज्ञानादिद्वादशकमाह । **ज्ञानमिति – ज्ञानं** भगव-द्विषयं तत्वज्ञानम् । **सत्यं** भूतहितम् । **दमः** इन्द्रियनिग्रहः । **श्रुतं** सच्छास्त्रश्रवणम् । **अमात्सर्यं** असौ मद्वशो न भवतीति चित्तविकारा-भावः । **ह्रीः** अकार्यकरणे लज्जा । **तितिक्षा** द्वन्द्वसहिष्णुता । **अनसूया** परगुणेषु दोषाविष्करणाभावः । **यज्ञः** द्रव्यमयोऽग्निष्ठोमादिः ज्ञानादिमयश्च । **दानं** सत्पात्रे द्रव्यस्य न्यायार्जितस्य त्यागः । **धृतिः** विषयसंनिधावप्यचाञ्चल्यम् । **शमः** विषयालम्बुद्धिः । महाव्रतानि

महानियमाः मोक्षसाधनीभूता इति यावत् । एतच्चैष चैषाचैतानीत्येकशेषे महाव्रतेत्यत्र जसः सुपांसुलुगिति डादेशः । यद्वा महाव्रता इति च्छेदः नपुंसकमनपुंसकेनेति तु नाश्रितम् । एते महाव्रताः । नियमो व्रतमस्त्रीत्यमरः ।। २० ।।

**यस्त्वेतेभ्योऽप्रवसे[१]द्वादशेभ्यः**
**सर्वामिमां पृथिवीं स प्रशिष्यात् ।**
**त्रिभिर्द्वाभ्यामेकतो वाऽविमुक्ताः[२]**
**क्रमाद्वियुक्ता मौनभूता भवन्ति ।। २१ ।।**

**वादिराजीयम्–** एवमपरोक्षपरोक्षज्ञानिब्राह्मणसाधारणज्ञानादिद्वादशमहागुणानभिधायेदानीं तेषां महिमास्तवनपूर्वकं तत्सामर्थ्यप्राप्यमुक्तिफलमुपदिशति— **य इति** । 'द्वादशेभ्य' इत्यर्थ्ये चतुर्थी, द्वादशसङ्ख्याविशिष्टानां **एतेभ्यः** ज्ञानादिनां लाभार्थं **यः** अधिकारी **प्रवसेत्** प्रकृष्टानां गुरूणां कुले वसेत्, उत्तमगुरुकुलवासं कुर्यादित्यर्थः **सः** अधिकारी ब्राह्मणः यथायोग्यज्ञानादेर्लब्ध्यनन्तरं **सर्वां** स्वयोग्यतानुसारेण सम्पूर्णामिमां प्रमाणसिद्धां पृथिवीं **प्रशिष्यात्** प्रशासिष्यति । तुनाऽत्र प्रसिद्धपृथिवीप्रशासनं नाभिमतं, तस्यान्यदेवतोद्देशिककाम्यकर्मप्राप्यत्वात् । अपितु ''ब्रह्मविदाप्नोति परं'', ''ज्ञानेनानन्दी भवति'' इत्यादिप्रामाणोक्तार्थानुसारेण ज्ञानादीनां तत्तद्योग्यतानुसारिमोक्षफलदातृत्वनियमस्यैवोक्तत्वादत्रोक्त 'पृथिवीं प्रशिष्या'दित्यस्य ''तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्या''दित्यानन्दमीमांसाश्रुत्युक्तयथायोग्यं 'प्रशिष्या'दिति शब्दवाच्यस्वयोग्यानन्दानुभवरूपमोक्षप्राप्तिरेवेति ग्राह्यम् । नचेत्— ''नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्''

१. प्रवसेत् इति प्रवसन्निति पाठान्तरम्

इत्याद्युक्तर्थानुसारेण ''ज्ञानवान्मां प्रपद्यते'' इत्यादिज्ञानादिप्राप्यमोक्ष-फलश्रावकवाक्यानां वैयर्थ्यापत्तेः । तुना सूचितस्त्वयमेवार्थो नान्य इति ।

नन्वेवं तर्हि ज्ञानादिद्वादशगुणसम्पत्तिसम्पन्नानामेव मोक्षप्राप्तिर्न तूक्त-समग्रगुणसामग्रिभिः किञ्चिद्धीनानामिति चेन्नायं नियमः । किन्त्वधिकारि-योग्यतानुसारेण येषु मुख्यवृत्त्येकद्वित्र्यादिसङ्ख्याविशिष्टानामपि ज्ञानादीनां स्वान्तर्भूतोर्वरितान्यगुणसम्पत्तिमतः या यथायोग्यमुक्तिफलदानशक्ति-रस्तीत्युपदिशन्शङ्कामपनुदति— **त्रिभिरिति** । 'वे'ति विकल्पः प्रत्येकं सम्बध्यते । **त्रिभिर्वा** ज्ञानसत्यदमादिभिर्वा **द्वाभ्यां वा** ज्ञानसत्याभ्यां वा **एकतो वा** ज्ञानमात्रेण वा । प्रत्येकं 'वे'त्यनेन अधिकारिविवक्षा सूचितेति ज्ञेयम् । **विमुक्ताः** इह जीवन्मुक्ताः भूत्वा **क्रमात्** अपरोक्षोत्तरसाधनानुष्ठानक्रमात् । यद्वा ''ब्रह्मणा सह मुक्तिगाः'' इत्यनेन अपरोक्षोत्तरसाधनपूर्त्यनन्तरं प्राप्यतत्तत्स्वोच्चदेवतानुप्रवेशक्रमाद्वा **विमुक्ताः** ''वि निषेधे विशेषे च पतत्रिणि हरावपि'' इति वचनात् अतिनिषिद्ध-लिङ्गसम्बन्धात् मुक्ताः विमुक्ताः भूत्वा अनन्तरं **मौनभूताः** मुनिप्राप्यो मौनस्तन्नामद्वारभूताः 'भू सत्ताया'मिति धातोः सायुज्यभावेन वा, सामीप्यभावेन वा, सारूप्यभावेन वा, सालोक्यभावेन वा, स्थिताः भवन्तीति ।। २१ ।।

**सत्यधर्मीयम्– यः** अधिकारी एतेभ्यः द्वादशेभ्यः । **अप्रवसेत्** अप्रवासं कुर्यात् । न तद्वियुक्तो भवेदित्यर्थः । सः सर्वां इमां पृथिवीं **प्रशिष्यात्** शिक्षयेत् स्वामी भवेदिति यावत् । त्रिभिः द्वाभ्यां एकतो वै तद्वादशमध्ये **अविमुक्ताः** समन्विताः क्रमात् वियुक्ताः संसृतेः **मौनभूताः** मुनिप्राप्य इति मोक्षो मौनं प्राप्ताः । मुक्ता इति यावत् । यत्स्वेतेभ्य इत्यादि चतुर्थी तादर्थ्ये । तद्गुणलाभार्थम् । **प्रवसन्** गृहं

विहाय गुरुकुले वसन् यः स सर्वां पृथिवीं प्रशिष्यात् । अधिकारि-विशेषस्येदफलम् । एतेषां गुणानां मध्ये त्रिभिर्गुणैः । द्वाभ्यां गुणाभ्यां । एकत एकस्माद्गुणाद्वा क्रमात् । विशिष्टगुणप्राप्तिक्रमानुसारेणापरोक्षज्ञानी भूत्वा **वियुक्ताः** भूतबन्धनरहिताः सन्तः मुनिप्राप्यो वैकुण्टादिस्तत्स्थो वैकुण्ठनामा भगवांस्तस्मिन् भूताः तदेकान्तकरणा भवन्तीत्यर्थः इति व्याचक्षते ।। २१ ।।

**दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम् ।**
**तानि सत्यमुखान्याहुर्ब्राह्मणा ये मनीषिणः ।। २२ ।।**

**वादिराजीयम्–** एवं पूर्वोक्तमहाधिकारिनिष्ठनिर्दुष्टगुणादिद्वादशगुणेषु निर्दुष्टदमादिगुणत्रयाणामेवात्यावश्यकत्वमुर्वरितज्ञानादिगुणनवकस्य च दमादित्रिकद्वारैव बलीयस्त्वकथनेन विदुषा त एवादौ सम्पादनीयाः इत्युप-दिशन् तेषामसाधारणलक्षणमाह— **दम इति । दमः** इन्द्रियनिग्रहः । **त्यागः** विषयाभिलाषत्यागः । **अप्रमादः** ''प्रमादोऽनवधानता'' इत्यभि-धानात्तदभावो अप्रमादः, स एव शम इति प्रोक्तः । **एतेषु** निर्दोषेषु दमादिगुणेषु **अमृतं** ब्रह्म **आहितं** स्थापितं, स्थितमित्यर्थः । अनेन निर्दुष्टत्वजितेन्द्रियत्वविषयविरक्तिमत्वभगवन्निष्टत्वगुणशालिनि ब्राह्मणे ज्ञानादिमहागुणदातृत्वेन भगवान् स्थितो भवतीत्यभिप्रायसूचनेनादौ ज्ञानादिक-महागुणप्राप्तये यदि दमादयस्त्वादौ सम्पादनीयास्तर्हि दमादिप्राप्तये तत्पूर्वसाधनं किमित्याशङ्कायामाह– **तानीति । तानि** ज्ञानादिगुणसाधनानि दमादीनि । **सत्यमुखानि** ''यत्सतां हितमत्यन्तं तत्सत्यमिति चोच्यते'' इत्यनेन स्वोत्तमसज्जनहिताचरणजनित-तदनुग्रहाख्यसत्यमेव मुख्यं साधनं येषां दमादीनां तानि तथा । अनेन दमादिप्राप्तये सत्सेवैव साधनमित्यर्थः सूचितः । किमत्र नियामकमिति चेत् शिष्टवचनमेवेत्याह– **ब्राह्मणा इति ।**

**ब्राह्मणाः** ''ब्रह्म वेदस्तपस्तत्वं'' इत्यभिधानात् वेदशास्त्रसम्पन्ना **ये मनीषिणः** ज्ञानिनः ते आहुः इत्याहुः । अनेनास्मिन्नर्थे सनत्सुजातेन स्वोक्तदृढीकरणाय शिष्टसम्मतिरप्यदर्शीति सूचितम् ।। २२ ।।

**सत्यधर्मीयम्– दमः** इन्द्रियनिग्रहः । **त्यागः** सत्पात्रेभ्यो द्रविण-दानम् । **अप्रमादः** अनवधानाभावः इत्येतेष्वमृतं मुक्तिः आहितं एत-त्क्रियावतां हस्तन्यस्ता मुक्तिरिति भावः । तत्र किञ्चिदितिकर्तव्यमाह– **तानीति** । सत्यं मुखं प्रधानं येषां तानि । **मनीषिणो** ब्राह्मणाः आहुः । सत्यमुखेष्वेतेष्वमृतमाहितमिति मनीषिणो वदन्तीति भावः ।। २२ ।।

**दमोऽष्टादशदोषः स्यात्प्रातिकूल्यं कृते[1] भवेत् ।**
**पैशुन्यमनृतं तृष्णा प्रातिरूप्यं[2] तमोरतिः ।। २३ ।।**

**वादिराजीयम्–** मुक्तिसाधनभगवदपरोक्षज्ञानादिमहागुणप्रापकदमादि-त्रयाणामपि दोषदूराणामेव तथाविधसामर्थ्योपेतत्वं, न तु सदोषाणामिति ज्ञापयन् आदौ प्रथमपठितत्वाद्दमदोषान् श्लोकत्रयेणाह— **दम इति । दमः** इन्द्रियनिग्रहरूपो दमः **अष्टादशदोषः** अष्टादशदोषापादक इति वा स्यात् । यतः यस्माद्दोषवर्गात् **कृतेः** ज्ञानादिगुणसाधनस्य दमाख्यकर्मणः **प्रातिकूल्यं** स्वानुष्ठानजनितसुकृतप्राप्यज्ञानादिमहागुणोत्पत्तौ सामर्थ्यं, भावरूपप्रतिकूलत्वं वा, भवेत् । यद्वा येषामन्यतमे दमे कृते दमस्य प्रतिकूलता भवेदिति वा । तर्हि दमदोषाः के त इत्याशङ्कायां तानाह– **पैशुन्यमिति** । (१) **पैशुन्यं** परदोषोक्तिः विवादादिपञ्चकान्यत्र उपक्षिलतानि । (२) **अनृतम्** अयथार्थ-भाषणम् । (३) **तृष्णा** विषयाकाङ्क्षा । (४) **प्रातिकूल्यं** स्वोत्तमहिता-चरणविरोधकरणं, यद्वा—सर्वेषां प्रतिकूलता वा । (५) **तमः** शास्त्रजन्य-

१. कृतेः इति पाठान्तरम् । २. प्रातिकूल्यमिति पाठान्तरम् ।

ज्ञानहीनता । (६) **अरतिः** यदृच्छालाभासन्तुष्टिः, सर्वत्रानलम्बुद्धिर्वा ।। २३ ।।

**सत्यधर्मीयम्–** प्रसङ्गसङ्गत्या दमदोषानाह– **दम इति** । **अष्टादशदोषः** तत्सङ्गत्यदोषवान् । तेषां दोषता किं कारणिकेति तत्राह । **कृते** एकस्मिन्वा दोषे हठाद्धटिते **प्रातिकूल्यम्** अमृतविघटनात्मकं भवेत् । ततो दोषतेति । १) **पैशुन्यं** परदोषोक्तिः । २) **अनृतं** मिथ्याभाषणम् । ३) **तृष्णा** अविषयविषयेच्छा । ४) **प्रातिरूप्यं** महत्सादृशता संपादनम् । ५) **तमः** अज्ञानम् । ६) **अरतिः** ईश्वरदत्तेनासन्तोषः ।। २३ ।।

**लोकद्वेषोऽभिमानश्च विवादः प्राणिपीडनम् ।**
**परिवादोऽतिवादश्च परितापोऽक्षमाऽधृतिः ।। २४ ।।**

**वादिराजीयम्–** (७) **लोकद्वेषः** स्वोत्तमज्ञानिजनद्वेषः । (८) **अभिमानः** स्वात्मनि महत्वज्ञानम् । (९) **विवादः** निषिद्धवाक्प्रलापः, यद्वा विशिष्टेषु वितण्डा । (१०) **प्राणिपीडनम्** स्ववर्गपोषणाय परपीडाचरणं, कलियुगदावविहितवाजपेयाद्याचरणेन अजादिपशुपीडनं वा । (११) **परिवादः** स्वोत्तमनिन्दा, सर्वलोकनिन्दा वा । (१२) **अतिवादः** निरर्थकातिप्रलापः, शास्त्रविरुद्धादिकोक्तिर्वा (१३) **परितापः** वृथा दुःखाभिध्यानम् । (१४) **अक्षमा** द्वन्द्वासहिष्णुता, स्वोत्तमेष्वसहिष्णुता वा । (१५) **अधृतिः** विषयेषु चपलता ।। २४ ।।

**सत्यधर्मीयम्–** ७) **लोकद्वेषः** लुक्प्रकाश इति स्मरणाज्ज्ञानिद्वेषः ८) **अभिमानः** अहन्ता ९) **विवादः** असंतं पक्षमाश्रित्य सद्भिः १०) **प्राणिपीडनम्** परोपद्रवो वृथा ११) **परिवादः** इतरनिन्दा १२)

**अतिवादः** वृथाकथा १३) **परितापः** ईश्वरदत्तेत्तरसौभाग्यं दृष्ट्वा सन्तापः १४) **अक्षमा** अक्षांतिः १५) **अधृतिः** अधैर्यम् ।। २४ ।।

**असिद्धिः पापकृत्यं च हिंसा चेति प्रकीर्तिताः ।**
**एतैर्दोषैर्विमुक्तो यः स दमः सद्भिरुच्यते ।। २५ ।।**

**वादिराजीयम्–** १६) **असिद्धिः** आरब्धकर्मणोऽनन्तगामित्वं १७) **पापकृत्यं** निषिद्धकर्माचरणम् १८) **हिंसा** प्राणिहिंसा, अविहितहिंसा वा **एतैः** उक्तैरष्टादशभिर्दोषैः **विमुक्तः** अश्लिष्टः (यः) **सः** स एव **दमः** दमाख्यो गुण इति **सद्भिः** सज्जनैरुच्यत इति । 'सद्भिरुच्यत' इत्यनेन सत्सम्मत्यनुकृतस्यैव दमस्य विशिष्टत्वमिति सूचितम् ।। २५ ।।

**सत्यधर्मीयम्–** १६) **असिद्धिः** प्रारब्धानन्तगामिता १७) **पापकृत्यम्** निषिद्धाचरणम् १८) हिंसावृथा । इत्यष्टादशदमदोषाः । प्रकीर्तिताः । एतैर्दोषैर्यः विमुक्तः स दम इति सद्भिरुच्यते ।। २५ ।।

**मदो[1]ऽष्टादशदोषः स्यात्त्यागो भवति षड्विधः ।**
**[2]विपर्ययाः स्मृता एते मद[3]दोषा उदाहृताः ।। २६ ।।**

**वादिराजीयम्–** एवं दमदोषानभिधायेदानीम् अप्रमादाख्यशब्दपर्यायपठितशमाख्यगुणस्य तानष्टादशदोषानाह— **शम इति** । **शमः** शमाख्यो अप्रमादः **अष्टादशदोषः** पूर्वोक्तदमसम्बन्ध्यष्टादशदोषविशिष्टः स्यात् । **त्यागः** पूर्वोक्तस्त्यागः **षड्विधः** षट्प्रकारः भवति । श्रुत्यादिषु दमशमयोर्दोषित्वोपपादकत्वेन प्रसिद्धैः पैशुन्यादिभिरेतैरेव दोषैस्तयोः स्वव्यतिरेकाचरणेन निर्दोषित्वापादकत्वं चाप्युदितमस्तीत्याह– **विपर्ययादिति** । ये पैशुन्यादयो

१. शम इति दम इति च पाठान्तरम् । २. विपर्ययात् इति पाठान्तरम् ।
३. दमदोषा इति शमदोषा इति च पाठन्तरम् ।

दमशमयोर्दोषा इति **स्मृताः** शास्त्रेषु ज्ञाताः त एव **विपर्ययात्** अपैशुन्य-प्रत्यभाषण-अतृष्णा-अप्रातिकूल्य-अतमो-रति-लोकाद्वेष – अनभिमान-अविवाद-अप्राणिपीडा-अपरिवाद-अनतिवाद-अपरिताप-क्षमा-धृति-सिद्धि-अपापकृत्याऽहिंसेति विपर्ययात् व्यतिरेकाचरणात्, विपरीताचरणादित्यर्थः। **दमदोषाः** शमादयो दोषाः 'दो अवखण्डन' इति धातोः निर्दोषापादकत्वेन पापखण्डका इत्युदाहृताः शास्त्रेषु पठिताः । अनेन पैशुन्यादीनामुभय-विधशक्तिरस्तीत्युक्तं भवतीत्यभिप्रायः ।। २६ ।।

**सत्यधर्मीयम्–** अष्टादशदोषः मदः तत्प्रकारमाह । उदाहृता ये दमनाशकतयाऽष्टादश त एव **विपर्ययाः** असत्यापैशुन्यातृष्णाप्रातिरूप्या-तमोरतिअलोकद्वेषानभिमानाविवादाप्राणिहिंसापरिवादानतिवादापरितापक्षमा-धृतिसिद्धिअपापकृत्याहिंसात्वेन तद्विपरीततां प्राप्ताः । एते **मददोषाः** मदनाशकाः **स्मृताः** स्मृतिसिद्धाः ।। २६ ।।

**श्रेयांस्तु षड्विधस्त्यागस्तृतीयः षट्सु दुष्करः ।**
**तेन दुःखं तरत्येव भिन्नं तस्मिन् जितं कृते ।। २७ ।।**

**वादिराजीयम्–** एवं दमशमयोर्दोषा एव त्यागगुणदोषा इति त्याग-गुणस्याष्टादशदोषानुक्त्वा तेषामेव व्यतिरेकाचरणेन श्रेयःसाधनत्वमुक्त्वा इदानीं निर्दोषस्यापि त्यागगुणस्य पात्रे दानादेर्वितरणवाचित्वेऽपि तस्य मुख्यतया कामाद्यरिषड्वर्गत्यागस्यैव महाश्रेयःसाधनत्वात् ''श्रेयांस्तु षड्विधस्त्यागः'' इत्यस्मिन् श्लोके षण्णामपि त्यागानां सामान्यतः सामर्थ्यमभिधाय ''अर्हते याचामानाय'' इत्युत्तरश्लोके एकैकस्मिन्नेव वाक्ये, त्यागद्वैविध्यार्थगर्भित-स्वबुद्धिगोचरत्यागत्रैविध्यकथनेन क्रमात् प्राप्ततृतीयसङ्ख्यापर्यवसायित्याग-द्वैविध्यार्थगर्भिततार्तीयत्वं कामत्यागस्येति वदिष्यमाणस्त्वस्मिञ्श्लोके तस्यैव

दुःखकरत्वं साधयति– **श्रेयानिति** । **त्यागः** त्यगाख्यो गुणः **षड्विधः** कामादिषट्शत्रुसम्बन्धित्वेन षट्प्रकारः श्रेयान् । 'श्रि श्रये' इति धातोः परित्यागभावेन आश्रयितुं योग्य एव । तु इत्यवधारणे । अनेन देवादि-भिर्महता प्रयासेन षडरयो जेतुं शक्या इति गर्भार्थो दर्शितः । सामान्यमुक्त्वा विशेषमाह— षट्स्विति । **षट्सु** षट्सङ्ख्याकेषु त्यागेषु **तृतीयः** उत्तरश्लोके त्यागद्वैविध्यविशिष्टतृतीयत्वेन परिपठितः त्यागः **दुष्करः** कर्तुमशक्यः । तेन उत्तरश्लोकोक्ततृतीयेन त्यागेन वा **भिन्नम्** आध्यात्मिकादिदुःखभेदेन भिन्नं **दुःखं** संसारदुःखं **तरन्ति** उत्तरन्ति । **तस्मिन्** तृतीये त्यागे **कृते** सम्यक्त्वेनाचरिते सति **जितं** पुरुषार्थचतुष्टयमपि जितं भवतीति शेषः ।। २७ ।।

**सत्यधर्मीयम्–** त्यागः षड्विधो भवतीति प्रतिज्ञातं तदाह– **षड्विधस्त्यागः श्रेयानतिश्रेष्ठ इति** । तत्राप्ययमतिश्रेयानिति श्रावयति । तृतीयस्त्यागः षड्गुणत्यागेषु सुदुःकरोति दुःसाधन इति । कुत इत्यत इत इत्याह । **तेन** तृतीयेन त्यागेन **भिन्नं** अध्यात्मकादिभेदभिन्नं दुःखं तरत्यधिकारी । किञ्च तस्मिंस्त्यागे कृते जेयं सर्वं जितं भवतीत्यवश्यं स संपाद्य इति भावः ।। २७ ।।

**अर्हते याचमानाय पुत्रान्वित्तं ददाति यत्[१] ।**
**इष्टापूर्तं द्वितीयं स्यान्नित्यं वैराग्ययोगतः ।। २८ ।।**

**वादिराजीयम्–** 'त्यागो भवति षड्विधः' इति पूर्वमेव सामान्येनोक्तं त्यागषट्कमेवात्र विविच्य दर्शयति— **अर्हते इति** । **अर्हते** ''विप्राय वेदविदुष'' इत्युक्तगुणसम्पन्नत्वेन दानयोग्याय, स्वकुटुम्बनिर्वाहार्थं देहीति

१. यः इति पाठान्तरम् ।

**याचमानाय**, गुणसम्पन्नविप्रायेत्यर्थः । **पुत्रान्** "पुमित्याहुः पूयशोणादि-भोजनम्" इति वचनात् **पू** दुःखभोगः तस्मात् त्रायन्त इति पुत्राः, अपत्यादयस्तान् **वित्तं** हिरण्यञ्च **यः** ज्ञानी इत्येतद्द्वयं ददाति । पुत्रान्वित्तमित्येतत्प्रथमद्विकम् । अनेन कामादित्यागषट्के क्रोधलोभयोस्त्यागो दर्शितः । विवेकस्तु— पुत्रादित्यागेन क्रोधत्यागो दर्शितः । वित्तत्यागेन लोभत्यागः । पुत्रत्यागस्तु दशरथादौ दृष्टचरः । **नित्यं** यावज्जीवं **वैराग्ययोगतः** धनादिसङ्ग्रहो अनित्यः तस्मादुपार्जितहिरण्यादेर्यज्ञाद्यनुष्ठानेन व्यय एव श्रेयानिति वैराग्यसम्बन्धात् **इष्टापूर्तं** इष्टं यज्ञकर्मणि दत्तं, पूर्तं तटाकादिनिर्माणकर्मणि दत्तं पूर्तम् । **द्वितीयं** द्वितीयद्विकम् । अनेन मदमत्सरयोस्त्यागो दर्शितः । पारत्रिकनरकभीत्या यज्ञकर्मणि वित्तत्यागेन मदत्यागः, सति मदे तदनुष्ठानायोगात् । पूर्ताचरणेन मत्सरत्यागः । एतेन धनिकेनाचरिततटाकाद्यपेक्षया अहमधिकाचरणेनाधिकः स्यामिति मात्सर्य-मपहाय पुण्यार्थमित्याचरणात् ।। २८ ।।

**सत्यधर्मीयम्–** तत्स्वरूपं निरूपयति– **अर्हत इति ।।** याचमानाय । पुत्रान् तदादीन्निमित्तीकृत्य जीविकार्थम् । **अर्हते** योग्याय वित्तं ददातीति यत् । स त्यागः लोभत्यागः प्राथमिक इत्युक्तं भवति । योग्यवितरणस्य तत्वात् । **इष्टापूर्तं** यजनतटाकादी । निर्माण-द्रव्यव्ययमोहत्याग-मनेनाभिप्रैति । अयं च द्वितीयस्त्यागः । नित्यं **वैराग्ययोगतः** तद्रूपोपायात् ।। २८ ।।

**कामत्यागश्च राजेन्द्र स तृतीय उदाहृतः ।**
**अप्रमादी भवेदेतैः स चाप्यष्टगुणो महान् ।। २९ ।।**

**वादिराजीयम्–** तृतीयद्विकः कामत्यागः । स इत्यनेन तस्य पूर्वोक्तं दुष्करत्वं ध्वनितम् । कामानां विषयाणां वैराग्ययोगेन **कामत्यागः**

विषयाभिलाषत्यागः उदाहृतः, शास्त्रेष्विति शेषः । अनेन दम्भकामयोः त्यागो दर्शितः । डाम्भिके कर्मणि वैराग्ययोगानुपपत्तेरतोऽत्र वैराग्ययोगत इत्यनेन दम्भच्छेदः । काम्यन्त इति कामाः विषयाः, तेषां त्याग एव कामत्याग इत्यभिप्रायेण "त्यागो भवति षड्विधः" इति पूर्वमुक्तमिति । अत्र तु द्विकत्रयान्तर्गतत्वेन पठितस्य तृतीयस्य कामस्य वैराग्यविषय-परित्यागस्योक्तत्वाद्वनितादिविषयाणां च सर्वथा परित्युक्तुमशक्यत्वात् "तृतीयः षट्सु दुष्करः" इति सनत्सुजातोक्तमित्यभिप्रायः । **एतैः** स्वात्मना सम्पादितैः षड्भिः त्यागैः **अप्रमादी** भगवत्सेवारूपस्वविहिताचरणे सावधः भवेत् । अनेन षड्विधत्यागगुणसम्बन्धेन अप्रमादाश्च भवन्तीत्यभिप्रायः सूचितः । **सः** अप्रमादाख्यो (महान्) गुणः **अष्टगुणः** अष्टविधः उदाहृतः, शास्त्रेष्विति शेषः । उक्तसर्वगुणेषु स्वसम्बन्धेनैव उत्तमप्राप्तिनियमात् अप्रमादगुणस्य महत्वमिति ॥ २९ ॥

**सत्यधर्मीयम्–** कामस्त्यागस्तृतीयः अनयोरेव दुःष्करतयोक्तः । अनेन लोभमोहकामत्यागास्त्रयो दर्शिताः लोभादिसाहचर्यात् क्रोधमद-मत्सराणां त्यागाश्च त्रय इति षड्विधा ज्ञेयाः । यद्वा "त्यागो भवति षड्विधः" इत्युक्तषड्विधत्यागानां द्विकत्रयं विवक्षित्वा प्रथमं द्विकमाह– **अर्हत इति** । पुत्रान् वित्तं ददातीति यत् । अनेन पुत्रदानं दानं वित्तस्येति प्रथमद्विकम् । द्वितीयं द्विकमाह– **इष्टापूर्तमिति** । तृतीयं दर्शयति– **नित्यमिति** । वैराग्यलक्षणोपायात् । कामादिविषयाणां त्यागः चकाराद्धनत्यागः इति तृतीयद्विकं एतदभिप्रायेण तृतीयं षड्गुणं दुष्करमित्युक्तमिति ज्ञेयम् । एतत्फलं लपति– **एतैः** पूर्वोदीरितैः षड्भिस्त्यागैः । **अप्रमादी** प्रमादिरहितो भवेदिति **स महान्** अप्रमादः अष्टगुणो भवति ॥ २९ ॥

**सत्यं ध्यानं[1] समाधानं चोद्यं वैराग्यमेवच ।**
**अस्तेयं ब्रह्मचर्यं च तथाऽसङ्ग्रह एवच ।। ३० ।।**

**वादिराजीयम्–** अप्रमादस्याष्टगुणमाह–**सत्यमिति** । (१) **सत्यं** यथार्थभाषणं, सज्जनहिताचरणं वा (२) **न्यूनं** "न्यूनं स्यादूनगर्ह्ययोः" इत्याभिधानात्, ऊनशब्दवाच्यं गर्ह्यं कर्म न भवतीति न्यूनं, अनिन्दित-कर्माचरणमित्यर्थः (३) **समाधानं** भगवति मनसः सम्यगाधानं स्थापनं (४) **चोद्यं** संशयनिरासाय गुरुकुलं गत्वा तत्वविषयकः प्रश्नः । "परिप्रश्नेन सेवया" इत्युक्तत्वात् (५) **वैराग्यं** विषयविरक्तिमत्ता (६) **अस्तेयं** स्वात्मनि परब्रह्मत्वज्ञानास्वीकारः । उक्तं च– "योऽन्यथा सन्तमात्मान-मन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा" इति (७) **ब्रह्मचर्यं** अष्टाङ्गमैथुनत्यागः । उक्तं च– 'दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ।। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' इति । (८) **असङ्ग्रहः** स्वजीवनवृत्यतिरिक्तधनादेरसञ्चयः । एवमष्टगुणकोऽप्रमादगुण इति ।। ३० ।।

**सत्यधर्मीयम्–** सत्यं ध्यानं हरेः । **समाधानं** प्राणायामादिना वायुस्तंभनम् । **चोद्यं** गुरुषु परमतत्वप्रश्नः। "परिप्रश्नेन सेवया" इत्युक्तेः । वैराग्यं दुर्विषयविषये । **अस्तेयं** हरिगुणानितरत्र स्वस्मिंश्चा-नर्पणम् । **ब्रह्मचर्यं** अष्टाङ्गमैथुनत्यागः । उक्तं च– "दर्शनं स्पर्शनं केलिः कीर्तिनं गुह्यभाषणम् । सङ्कल्पोध्यवसायश्च क्रियानिर्वृत्तिरेवच । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः" इति । ऋतुगामिता वा । **असङ्ग्रहः** अपरिग्रहः जीविकाधिकसंग्रहवर्जनम् ।। ३० ।।

---
१. न्यूनमिति पाठान्तरम् ।

**एवं दोषा दमस्योक्तास्तान् दोषान् परिवर्जयेत् ।**
**दोषत्यागोऽप्रमादः स्यात् स चाप्यष्टगुणो मतः[1] ।। ३१ ।।**

**वादिराजीयम्–** ननु "दमोऽष्टादशदोषः स्यात्" इत्यारभ्य "सत्यं न्यूनमित्यन्तेन दमशमादीनां गुणदोषकथनेन किं प्रयोजनमित्याशङ्कायां ज्ञातगुणदोषस्यैव पुंसो दोषवर्जनेन गुणस्वीकारस्योक्तत्वात्तदज्ञानात्तदपदेशः सम्भाव्यत इत्याह— **एवमिति** । एवमुक्तरीत्या **दमस्य** दमाख्यगुणस्य ये दोषाः उक्ताः **तान्** पूर्वोक्तान् दोषान् **परिवर्जयेत्** ज्ञात्वा सर्वत्र सर्वदा त्यजेत् अधिकारी पुरुष इति शेषः । **अष्टगुणः** सत्याद्यष्टभिर्गुणैर्विशिष्टो यः **अप्रमादः** अप्रमादाख्यो गुणः **स च** सोऽपि **दोषत्यागः** दमादि-गुणसम्बन्धिनां दोषाणां हेयत्वज्ञानपूर्वकं परित्याग एव, नान्य इति । अनेन उक्तगुणेभ्यस्त्वन्यस्त्वप्रमादाख्यो गुणोऽस्तीति शङ्का निरस्तेति ज्ञायते । दमादिदोषवर्जनस्यैवाप्रमाद इत्युक्तत्वात् ।। ३१ ।।

**सत्यधर्मीयम्–** इदानीं दमदोषा वर्ज्या इत्याह– **एवमिति** । दमस्य दोषा एवमुक्ताः तान् दोषान् परिवर्जयेत् । तत्याग एवाप्रमादः सोऽपि **अष्टगुणः मतः** सत्यादिपूर्वोक्ताष्टगुणरूप इति ज्ञानिनां सम्मतः ।।३१।।

**तांस्तु सत्यमुखान्याहुस्तं[2] सत्येऽमृतमाहितम्[3] ।**
**सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः ।।३२।।**

**वादिराजीयम्–** इदानीं सज्जनहिताचरणशीलः सनत्सुजातः धृतराष्ट्रनामकमहाधिकारिगन्धर्वावतारत्वेऽपि वैचित्रवीर्यधृतराष्ट्रस्य प्रारब्ध-वशात्प्राप्तदुष्पुत्रसङ्गादिजनितकल्यावेशवशादुद्भूताज्ञानेन स्वोद्धरणसमर्थ-

१. महानिति पाठान्तरम् । २. तमिति विरहितं पाठान्तरम् । ३. सत्ये ह्यमृतमाहितमिति पाठान्तरम् ।

श्रीकृष्णपक्षपातिदेवोत्तमावतारपाण्डवविरोधजनितापराधेन अप्राप्ता निर्वृति-स्तदनुग्रहेणैवास्य भविष्यतीत्यतस्तदनुग्रहप्राप्तये तद्धिताचरणरूपा सेवैव त्वया कार्येत्युपदेशगर्भितसत्यप्रशंसां विधत्ते– **तानिति । तान्** पूर्वोक्तान् ज्ञानादि-गुणान् **सत्यमुखान्** ''यत्सतां हितमत्यन्तं तत्सत्यमिति चोच्यते । यत्सतां धारको धर्मः'' इत्यादिषूक्तसद्धिताचरणरूपसत्यशब्दवाच्यधर्म एव, मुखः मुख्यत्वापादको येषु ते तथा तान् आहुः । ज्ञानिन इति शेषः । अनेन ''सतामनिष्टकरणाद्धर्महानिः पदे पदे । तेषामेवेष्टकरणाद्धर्मवृद्धिः पदे पदे'' इति वाक्यं प्रमाणयति ।

ननु सर्वेषां धर्माणां सत्यमुखत्वे को हेतुरित्याशङ्कायाम् आह– **सत्येति । सत्ये** सद्धिताचरणाख्ये धर्मे **अमृतं** मोक्षमाहितं स्थापितं, तदधीनत्वेन स्थितमित्यर्थः । ''सत्येन न सुवर्गाल्लोकाच्च्यवन्ते तस्मात्सत्यं परमं वदन्ति'' ''महत्सेवां द्वारमाहुर्विमुक्तेः'' इत्यादिश्रुतिस्मृतिषु तथोक्तत्वात् । अतो महाफलेच्छुना पुरुषेण महत्सेवैव कार्येत्यभिप्रायः सूचितः । यद्वा– **सत्ये** यथार्थभाषणरूपसत्याख्ये धर्मे च **अमृतं** स्वर्गादिकं आहितमित्याहुरिति वा ।

एवं सत्याख्यधर्मस्यैव सर्वधर्ममुख्यत्वमभिधाय इदानीं तदनुष्ठानेन तवापि सज्जनोत्तमपाण्डवद्वेषोत्थमहानिष्टनिवृत्तिः स्यादिति स्वहार्दाभिप्रायं व्यञ्जयन्निव साक्षात्तमेवोपदिशति– **राजेन्द्रेति । हे राजेन्द्र** राजश्रेष्ठ धृतराष्ट्र! त्वमपि **सत्यात्मा** सद्धिताचरणशीलमनाः भव । मयोक्तोऽयं धर्मः शिष्टपरिगृहीत-त्वादनुष्ठेय एवेत्युपदिशन् स्वोक्तदृढीकरणाय एतस्य शिष्टाचारं दर्शयति– **सत्ये** मयोक्ते सत्याख्ये धर्मे लोकाः ''लुक्प्रकाश'' इति धातोः ज्ञानप्रकाशिनो ज्ञानिजनाः **सत्ये** सद्धिताचरणाख्ये धर्मे प्रतिष्ठिताः ''ष्ठागतिनिवृत्तौ'' इति धातोः प्रकृष्टतया अचाश्चल्यभावेन स्थिताः, तस्यैवाचरणे स्थिता इति शेषः । अतः सर्वैरनुष्ठेयोऽयं धर्म इति ।। ३२ ।।

**सत्यधर्मीयम्–** पूर्वोक्तं सत्यगुणं स्तौति– **तानिति** । **तान्** अप्रमादप्रभेदान् । सत्यं मुखं प्रधानं येषांते तान् । तं **सत्ये** सर्वगुण-प्रधानभूते सत्याख्ये गुणे **अमृतं** मोक्षः समाहितम् तत्साध्यतयाऽ-वधारितमित्यर्थः । हे राजेन्द्र त्वं **सत्यात्मा भव** सत्ये सत्यवचने भूतहिते वा आत्मा मनो यस्य तादृशो भव । **लोकाः** भूरादयः सज्जना वा । **प्रतिष्ठिताः** तदाश्रित्य वर्तन्त इत्यर्थः ।। ३२ ।।

**निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत् ।**
**एतद्धातृ[१]कृतं वृत्तं सत्यमेव सतां मतम् ।। ३३ ।।**

**वादिराजीयम्–** एवं तपःशीलानां तपसो गुणदोषज्ञानाय तानुक्त्वा इदानीं निर्दुष्टगुणसम्पन्नतपस एव सद्भिर्विधेयत्वमिति विधत्ते– **निवृत्तेनेति** । **इह** ब्राह्मणजन्मनि **तपः** तपआख्यं **व्रतं** आचरणनियमं **निवृत्तेन** परिहृतेन दोषेण आचरेत् निर्दोषतपसेत्यर्थः । स्वोक्तार्थे शिष्टसम्मतिं दर्शयति– **एतदिति** । **एतत्** मयोक्तमेतत् **वृत्तं** तपसो वर्तनं आचरणमित्यर्थः धात्रा कृतम् । ''मया कृतमि''ति पाठे तु स्वात्मनोऽपि ऋषित्वात्स्वाचारस्यापि सर्वऋष्यनुसारित्वमिति ज्ञापनाय मया कृतमिति । यद्वा—'मया' इत्यत्र सनत्सुजातनाम्ना मयाऽपि कृतं आचरितम् । स्वात्मनोऽपि ऋष्येकत्वादृषीणां च सद्धर्मप्रवर्तकत्वात्स्वसम्मतेरपि प्रामाण्यापादनाय 'मया' इत्युक्तमिति वा । अतः सर्वैरनुष्ठेयमिति 'मया कृतमि'ति । तव सम्मतिः क्वोपयुक्तेति चेत् मत्सम्मतेरेव शिष्टपरिगृहीतत्वेन विशिष्टत्वान्नास्ति शङ्कावसर इत्युपदिशन् शिष्टसम्मतिं दर्शयति— **सत्यमिति** । **सतां** सज्जनानां **मतं** सम्मतं एव **सत्यं** यथार्थरूपम् । मन्मतमेव सज्जनानां संम्मतमित्यर्थः ।। ३३ ।।

---

१. एतद्धात्रेति एतन्मयेति च पाठान्तरम् ।

**सत्यधर्मीयम्–** **निवृत्तेनैव** **दोषेण** परिहृतेन क्रोधादिदोषेण निमित्तेनेत्यर्थः । तपोलक्षणं व्रतमिहाचरेत्पुमान् । एतत् सत्यं **धातृकृतं** धात्रा परमेश्वरेण कृतं **वृत्तं** सच्चरित्ररूपं सतां समंतं च ।। ३३ ।।

**दोषैरेतैर्विमुक्तं तु गुणैरेतैः समन्वितम् ।**
**एतत्समृद्धमप्यृद्धं तपो भवति केवलम् ।। ३४ ।।**

**वादिराजीयम्–** एवं सकलशास्त्रार्थसम्मत्या निर्दुष्टगुणविशिष्टतपस एवोत्तमत्वं संसाध्याधुना पुनरुपसंहारमुखेनापि केवलऋद्धस्यैव तपसो विधेयत्वं विधत्ते– **दोषैरिति । एतैः** पूर्वोक्तैर्दोषैः क्रोधादिभिर्विमुक्तं, **गुणैः** ज्ञानादिभि-र्द्वादशैर्गुणैः **समन्वितं** संयुक्तम् **एतत्** एतदेव **केवलं** दोषयोगव्यवछिन्नं **तपः** तप एव **समृद्धमपि** यावदुक्तफलापादकमपि तत्तप आदिकर्मणा तत्तत्कर्म-ण्यधिकृततत्तद्देवतानां च भगवत्समर्पणभगवदधीनताभावनारूपानुसन्धान-पूर्वकानुष्ठानबलाज्ज्ञानिनां **ऋद्धं भवति** मुक्तौ क्लृप्तानन्दातिशयापादकं भवतीति ।। ३४ ।।

**सत्यधर्मीयम्– एतैः** क्रोधादिभिः **एतैर्गुणैः** ज्ञानसत्यादिभिः एत-त्समृद्धमिति पूर्वोक्तस्योपसंहारः ।। ३४ ।।

**यन्मां पृच्छसि राजेन्द्र संक्षेपात्प्रब्रवीमि ते ।**
**एतत्पापहरं शुद्धं जन्ममृत्युजरापहम् ।। ३५ ।।**

**वादिराजीयम्–** प्रश्नार्थप्रवचनस्य समाप्तत्वादितःपरमुपरम्यते किमिति शङ्का मा भूदिति धृतराष्ट्रस्य हार्दं चोद्यं परिहरति— **यन्मामिति । हे राजेन्द्र** धृतराष्ट्र! इतःपरं मां प्रति **यत्** यादृशं प्रमेयं **पृच्छसि** पृष्टोऽसि तत् तदपि प्रमेयं **सङ्क्षेपात्** सङ्कोचात् **ते** तुभ्यं प्रब्रवीमि । सनत्सुजातमुनिरेवं

वक्ष्यमाणार्थकथने प्रब्रवीमिति प्रतिज्ञायोक्तार्थश्रवणादेः फलश्रुतिमुदाहरति– **एतदिति** । एतत् मृत्युसद्भावासद्भावविषयक-त्वदीयप्रश्नोत्तररूपं ''प्रमादं वै मृत्युमहं ब्रवीमि'' इत्यारभ्य ''दोषैरेतैः'' इत्यन्तेन मयोक्तमेतत्प्रमेयं **शुद्धं** निर्दुष्टं **पापहरं** पापपरिहारकं **जन्ममृत्युजरापहं** च जननमरणजरात्मक-संसारमपहन्तीति तत्तथा, श्रवणमननादिकुर्वतामिति शेषः ।। ३५ ।।

**सत्यधर्मीयम्–** किं बहुनेति सुखहेतुं समासतः शंसति– **एतदिति** । **पापहरं** प्रारब्धेतरपापहरं **शुद्धं** फलाभिलाषरहितम् ।। ३५ ।।

**इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।**
**अतीतानां गतेभ्यश्च मुक्तश्चेत्स सुखीभवेत् ।। ३६ ।।**

**वादिराजीयम्–** ननु कथमेतस्य त्वदुक्तस्य प्रमेयस्य श्रवणादिना जनना-द्यात्मकसंसारनिर्मूलनेन पापाद्यनिष्टनिवर्तकत्वमित्याशङ्क्य न तपोऽनशना-त्तुल्यमित्यादिषूक्तरीत्या मदुक्तानशनादिना विषयोपरक्तसर्वेन्द्रियजयद्वारा विषयविरक्तिमत्वेनानुष्ठितश्रवणादिसाधनेन सुप्रीतभगवदपरोक्षोत्तरकाल एवाश्लेष-विनाशभावप्राप्तोत्तरपूर्वाघद्वारा जीवन्मुक्तत्वप्रापणेनेत्युक्त्या परिहरति– **इन्द्रिये-भ्यश्चेति** । हे भारत! मदुक्तनिर्दिष्टतपआदेरनुष्ठाता चेत् **सः** तपस्वी पुरुषः **पञ्चभ्यः** पञ्चसङ्ख्याकेभ्यः **इन्द्रियेभ्यः** चक्षुरादिज्ञानेन्द्रियेभ्यः चेत्यनेन कर्मेन्द्रियाणामप्रधानत्वेन ज्ञानेन्द्रियेष्वन्तर्भावः सूचितः । **मनसश्च** नानावास-नात्मकमनसः सकाशाच्च **अतीतानागतेभ्यः** सञ्चितागामिशब्दवाच्येभ्यः कर्मभ्यः चशब्दबलादनिष्टपुण्यपापेभ्य इति सूचितम् । **मुक्तः** विमुक्तः सन् **सुखी** स्वरूपसुखवान् भवेत् । अत्र इन्द्रियादिभ्यो विमोचनं नाम मुक्तिदशायां प्राकृतबाह्येन्द्रियाणां स्वरूपतो विनाशित्वेन स्वस्वरूपेन्द्रियैः अवस्थाननियम एव मुक्तिरिति ।। ३६ ।।

**सत्यधर्मीयम्– स सुखीभवेत्** इन्द्रियाभिमतित्याग एव सुखकारण-मित्यर्थः जीवन्मुक्त इति यावत् । तत्किं रूपमित्यतो रूपयति– **इन्द्रियेभ्य पञ्चभ्यः** श्रोत्रादिभ्यः । मनसश्चेति स्वतन्त्रतया पृथागुक्तिः मुक्तश्चेदभिमान-रहित इति यावत् । अतीतानागतेभ्यस्तद्विषयेभ्यो मुक्त इति ।। ३६ ।।

**धृतराष्ट्र उवाच–**

**आख्यानपञ्चमैर्वेदैर्भूयिष्टं कत्थते[1] जनः ।**
**तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथापरे ।। ३७ ।।**

**वादिराजीयम्–** एवं सनत्सुजातमुखाच्छ्रुतमोक्षसाधनीभूततपोमहिमा धृतराष्ट्रः इदानीं ब्राह्मणानां वेदाध्ययनज्ञानादिनैव सत्पात्रत्वं, नान्येनेति सामान्यतो ज्ञातपात्रापात्रास्वरूपोऽपि विशेषविवित्सया अर्थतो नित्यै-र्भारतादिभिः सह पञ्चसङ्ख्यागतैश्चतुर्भिरधीतैर्वेदैरेव ब्राह्मणानां पात्रोत्तमत्वमिति महाजनवादस्तथापि, न हि लोके सर्वेऽपि ब्राह्मणाः पञ्चवेदिन एव सन्ति, अपितु स्वशक्त्यानुसारेण पञ्चचतुस्त्रिकद्विकैकवेदाध्यायिनामपि सत्वात्किमु पञ्चवेदिनामेव पात्रत्वं, नान्येषामित्येव नियम उत योग्यतानुसारेणान्येषामिति विवेकाज्ञानेन पृच्छतो ममैतेष्वधिकपात्रस्वरूपकथनेन शङ्कामपाकुर्विति स्वाभिप्रेतं विविच्य श्लोकद्वयेन पृच्छति– **आख्यानपञ्चमैरिति** । आख्यान-मितिहासपुराणानां पञ्चत्वसङ्ख्याप्रापकं येषां ते तथा तैर्वेदैः, तदध्ययनादि-सम्बन्धैरित्यर्थः । **जनः** ब्राह्मणवर्गः, जन्यत इति जनो ब्राह्मणदेहो वा । **भूयिष्टं** अत्यर्थम् कथ्यते ''कत्था श्लाघायां'' इति धातोरात्मानं पञ्चवेदा-ध्यायित्वेन महत्वबुध्या श्लाघते । 'कथ्यते' इत्येतत् सर्वत्र सम्बध्यते । तथेत्यनेन अन्ये पञ्चवेदिभ्योऽन्ये केचन । **चतुर्वेदाः** वेदचतुष्टयाध्यायिनश्च; तथेति दृष्टान्तकथनेन पञ्चवेदिवत्तेऽपि स्वात्मनि महत्वबुद्ध्या स्वात्मश्लाघां

१. कथ्यत इति पाठान्तरम् ।

कुर्वन्तीति ज्ञायते । **अपरे** केचन त्रिवेदाः । चेति समुच्चयेन ते त्रिवेदा-ध्यायिनोऽपि तथा पञ्चवेदिचतुर्वेदिवत्स्वात्मनि महत्वबुद्ध्या वयमेव महान्त इति स्वात्मश्लाघां कुर्वन्त्येव । प्रत्येकं 'चे'त्येतदत्रापिशब्दार्थे ।। ३७ ।।

**सत्यधर्मीयम्–** एवमुक्तो धृतराष्ट्रः पृच्छति– **आख्यानेति । आख्यानं** ''इतिहासपुराणः पञ्चमो वेदानां वेद इति'' छान्दोग्योपनिषदुक्तेः इतिहास-पुराणाख्यपञ्चमसहितैश्चतुर्भिर्वेदैः **भूयिष्टं** अति अयं जनः कत्थते । आत्मानं श्लाघते । तत्साहित्येनात्मानं बहुमन्यते । कथ्यत इति पाठे जनः । जनः पञ्चवेदीति कथ्यत इत्यर्थः । अन्ये चतुर्वेदाः केचित् त्रिवेदाः ।। ३७ ।।

**द्विवेदाश्चैकवेदाश्च अनृचश्च तथाऽपरे ।**
**एतेषु मेऽधिकं ब्रूहि यमहं वेद ब्राह्मणम् ।। ३८ ।।**

**वादिराजीयम्– द्विवेदाः** वेदद्वयाध्यायिनश्च तेऽपि, तथा **एकवेदाः** केचन एकवेदाध्यायिनश्चापि तथेति । अत्र सर्वत्र 'वेद'शब्दः अध्येतु-र्महत्वापादने, 'वेद (विद्) ज्ञान' इति धातोः, तदर्थविचारणपरः, न तु पाठमात्रपर इति । अपरे केचन अनृचश्च । अनृच इत्यनेन वेदबाह्याः इत्यर्थो न विवक्षितः किन्तु तद्विशिष्टत्वेऽपि तत्प्रवचनादिकं विहाय भगव-द्ध्यानैकपराः तेऽपि **तथा** स्वात्मानं बहु मन्यन्त एव । **एतेषु** एवं बहुधा विभक्तेषु पात्रेषु मध्ये **मे** पात्रस्वरूपेच्छावतः मम **अधिकं** पात्रोत्तमं **ब्रूहि** 'ब्रूञ् व्यक्तायां वाचि' इति धातोः निःसंशयेनाख्याहि । **अहं एनं** त्वदुपदिष्टज्ञानेन **ब्राह्मणं** अयमेव पात्रोत्तम इति पात्रोत्तमलक्षणसम्पन्नं ब्राह्मणं **वेद्मि** जानीयामिति ।। ३८ ।।

**सत्यधर्मीयम्–** द्विवेदाः तथापरे चैकवेदाः केचन च **अनृचः** ऋगादि-त्यागिनश्च यथा **एतेषु** ब्राह्मणेषु **यमधिकं** श्रेयांसं अहं **वेद** विद्यां तथा ब्रूहि ।। ३८ ।।

**सनत्सुजात उवाच–**

**एकवेदस्य चाज्ञानाद्वेदास्ते बहवोऽभवन् ।**
**सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ।।**

**वादिराजीयम्–** एवं पात्रोत्तमब्राह्मणस्वरूपविचारशीलेन धृतराष्ट्रेण पृष्टः सनत्सुजातः पञ्चेत्यादिसङ्ख्याविशिष्टवेदाध्ययनादिना ब्राह्मणस्य नोत्तमत्वं, अपि तु वेदमुख्यार्थप्रतिपाद्यभगवदनुसन्धानज्ञानपूर्वकाध्ययनादिशालिन एवोत्तमपात्रमित्युत्तरग्रन्थेनोपदिशन्नादौ उपोद्घातसङ्गत्या "अनन्ता वै वेदा" इति प्रमाणानुसारेणैकराशित्वं प्राप्तानां "त्रयोऽर्थाः सर्ववेदेषु" इति प्रमाण-बलादमुख्यमुख्यपरममुख्यभेदेन तत्तत्कर्म तत्तदधिकृतदेवतानां च भगवतश्च प्रतिपादकानां "ऋ गतौ" "यज् पूजायां" इत्यादिधात्वर्थबलात् ज्ञानादि-प्रतिपादकानामल्पाधिकारिजनबुध्यगोचराभिप्रायाणां सर्वेषामप्यनन्तानां वेदानां परममुख्यार्थापरिज्ञानेनानवाप्तस्वयोग्यज्ञानादि- धर्मसप्पन्नाल्पमतिजनोद्धाराय परमदयालुभिर्ब्रह्मादिभिरर्थितो भगवान् नारायणो व्यासत्वेनावतीर्य तत्त-दधिकारियोग्यभगवदपरोक्षज्ञानोदयाय ऋगादिशब्दपदार्थगर्भितैकगतऋगादि-शब्दभेदभिन्नवेदचतुष्टयांशेन शाखाचतुष्टयमचीक्लृपदित्युपदिशति– **एकवेदस्येति** ।

**एकवेदस्य** मूलविवक्षया अविभक्तऋगादिलक्षणकस्यैकस्य वेदस्य **अज्ञानात्** अधिकारिणामपि ज्ञानशक्त्यभावात्, एकत्वसङ्ख्याविशिष्टाः **त** एव **वेदाः बहवः** ऋगादिशब्दवाच्यत्वेन बहुत्वसङ्ख्याविशिष्टाः अभवन् । चेत्यनेन अल्पाधिकारिणां ऋगादिभेदभिन्नत्वेऽप्येकत्वेनावस्थितानामनन्तानां वेदानामध्ययनाद्याचरणायाशक्ताल्पमतिजनदयालुना भगवता बादरायणेन अवतीर्य बहुशाखाभेदभिन्नऋगादिभेदभिन्नचतुर्धाविभक्तवेदतरुशाखोद्धारः कृत इत्यर्थः सूचितः । तदुक्तं– "ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान्विभुः । यजूंषि निगदाच्चैव तथा सामानि सामतः" इति । भारतस्य वेदान्तःपरिगणने

प्रमाणं च—"भारतब्राह्मणादीनि वेदार्थपरिवित्तये" । इत्यादि । नन्वस्त्वेवं वेदानां बहुधाविभक्तत्वं तेषामध्ययनादेः साध्यप्रयोजनानवश्यकत्वं किं न स्यादित्याशङ्क्य तदध्ययनस्य भगवदपरोक्षज्ञानसाधनत्वेन महाप्रयोजनस्य सत्त्वादावश्यकत्वमित्याह— **सत्यस्येति । राजेन्द्र!** हे धृतराष्ट्र! एकस्य समाधिकरहितस्येत्यर्थः, स्वगतभेदशून्यस्येति वा । **सत्यस्य** । उक्तं च छान्दोग्ये—"तस्य ह वा एतस्य ब्राह्मणो नाम सत्यम्" इति, "तानि ह वा एतानि त्रीण्यक्षराणि" इत्यादि । स्मृतिश्च— "उत्तमानन्दसंविद्भ्यां पूर्णत्वादनिशं हरिः । सत्य इत्युच्यते वेदैः सत्यसङ्कल्पतः सदा" इति प्रमाणबलात्सत्यशब्दवाच्यस्य श्रीनारायणस्य, ज्ञानर्थमिति शेषः ।

ननु तर्हि वेदाध्ययनादिना प्राप्तापरोक्षज्ञानेन भगवन्निष्ठावान् क इत्याशङ्कायां ब्रह्मादिमनुष्योत्तमान्ताः सर्वेऽपि सात्विकजीववर्ग इत्याह— **सत्ये इति । सत्ये** निर्दुष्टस्वज्ञानान्दपूर्णे भगवति **कश्चित्** कं सुखं, चित् ज्ञानं, कश्च चिच्च कश्चित्, सुखज्ञानस्वरूपः सात्विकजीवकोटिरित्यर्थः। **अवस्थितः** अवेत्युपसर्गेण अचाश्चल्येन तदेकनिष्ठ इति । यद्वा, नन्वेवं चेद्वेदाध्ययनादि-सम्पत्तेर्बहुष्वपि सत्वात्तेषां सर्वेषामपि भगवदपरोक्षज्ञानप्रसङ्ग इति चेन्न । किन्तु वेदाधिकारिषु साधनपूर्तिमान्यः कश्चिदेवेत्यतो वा आह– **कश्चिदिति । कश्चित्** भगवज्ज्ञानार्थं यततां मध्ये साधनपूर्तिमान्यः कश्चिदिति वा । उक्तं च गीतायां– "यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः" इत्यदिना । अथवा, "मारुते वेधसि ब्रध्ने पुंसि कं शिरोऽम्बुनि" इत्यभिधानात् को वायुः, चेतयतीति स्वावरं सर्वमिति चित्; कश्चासौ चिच्चेति विग्रहः; **कश्चित्** मुख्यप्राणः **सत्ये** निर्दुष्टज्ञानान्दादिपूर्णे भगवति **स्थितः** अनन्तवेदानां भगवत्परार्थपरालोचनया अखण्डभक्तिमत्वेन स्थित इति वा ।। ३९ ।।

**सत्यधर्मीयम्–** पञ्चवेदाश्चतुर्वेदा इत्याद्युक्तिरादौ नासीदासीद्राशिरेक एवानन्तरमेतत्संज्ञाः प्रापेति भगवानुत्तरमीरयति– **एकस्येति** । कार्त-युगस्य **एकस्य** मुख्यस्य राशीभूतस्य चेत्यर्थः ।

एको वेदः कृते ह्यासीत् त्रेतायां स त्रिधाऽभवत् ।
नैव ऋक्सामादिनामानि तदा वेदस्य चाभवन् ।

मूलवेद इति ह्याख्या'' इत्याथर्वणभाष्योक्तेः ।

''चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ।
ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान्प्रभुः ।
यजूंषि निगदाच्चैव तथा सामानि सामतः ।
वेदमुत्सन्नं व्यञ्जयन् .......
चतुर्धा व्यभजत्तांस्तु चतुर्विंशतिधा पुनः
शतधा चैकधा चैव तथैवच सहस्रधा ।

कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये । चकारब्रह्मसूत्राणि'' इत्यादेः । ''ततो नृणां कालबलात्सुमंदमायुर्मतिं कर्मच वीक्ष्य कृष्णः । विव्यास वेदान् भगवांश्चतुर्धा'' इत्यन्यत्राप्युक्तेः । **वेदस्य** वेदयतीति वेदः तस्य भगवन्मात्रावगमस्य । **अज्ञानात्** तन्मात्रपरतानयनज्ञानहीन-तायाः अधिकारिनिष्ठायाः निमित्तात् । **ते** व्यत्ययेन स एव । वेदाः कृताः व्यासेनेति शेषः ।

पूर्वं एकस्य **सत्यस्य** साधुगुणकस्य सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि श्रुत्युक्तभगवतः । कर्मणि षष्ठी । तत्प्रतिपादकत्वेन वेदशब्दस्य मध्ये त्रेतादौ मध्यमाद्यधिकारिविवक्षया **सत्ये** तद्विषये कश्चिद्भाग एवावस्थितः बुध्यादिमांद्यात् क्रत्वादिपरतया नीत इति यावत् । ''द्वेविद्ये वेदितव्ये

इति हस्म यद्ब्रह्मविदो वदन्ति । पराचैव पराच । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वणवेदः शिक्षा कल्पो व्याकरणं निरुक्तं छान्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते'' इत्यथर्वोपनिषदुक्तेः।

ऋगाद्या अपरा विद्या यदाविष्णोर्न वाचकाः ।
ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ।।

इति परमसंहितायामिति तद्भाष्यात् । सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्य इत्यादेः । आह च भगवान् – समाकर्षादिति ।

परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि ।
व्यवह्रियन्ते सततं लोकवेदानुसारतः ।। इति पाद्मोक्तेः ।

एतेन क्रत्वादिलोपः । सत्यस्य सर्ववेदवेद्यत्वज्ञानं दुःशकमित्यनधिकारिकमवचनीयमिति न वचनीयमित्यप्याह– **एकस्य** मुख्यस्य **सत्यस्य** ब्रह्मणः एकस्यैव वेदस्य वेद्यस्यैव **आज्ञानात्** सम्यग्ज्ञानं प्राप्य **सत्ये** तन्नाम्नि लोके । अवस्थितः **कश्चित्** क एव चतुर्मुख एव । व्याख्यातो ब्रह्मणा मरुत्, भारतीच सरस्वत्या, किश्चित्पराधयेन[१] कश्छन्दसां योगमावेदधीरः'' इत्यतो नाधिकारिविरहः । उक्तं चानुव्याख्याने–

कश्छन्दसां योगमिति श्रुतेर्योगार्थतत्ववित् ।
ब्रह्मैको नैव चान्योस्ति क इत्यस्योभयार्थतः ।। इति ।

ब्रह्मा सर्वैर्गुणैश्चैव क्रिया सामान्यतश्च गीरित्यादिस्थानान्तरेच । वेदोक्तसमस्तगुणक्रियोपेततयाऽनन्तरूपं हरिमुपासितुं ब्रह्मैव योग्य इत्यर्थः । चस्त्वर्थः । सरस्वती तु क्रियासामान्यतः क्रियासङ्कोचेनोपास्ते । सकलवेदोक्तगुणोपेततयाऽनन्तरूपं हरिमुपास्ते । त्रिविक्रमत्वादिक्रियास्तु नित्यविक्रान्त्यादिष्वन्तर्भावयतीत्यर्थ इत्यादितत्सुधाभिधानात् ।। ३८ ।।

१. कश्चिदिति पदद्वयेन भाव्यमिति भाति ।

**[1]एवं वेदमविज्ञाय प्राज्ञोऽहमिति मन्यते ।**
**दानमध्ययनं यज्ञो लोभादेतत्प्रवर्तते ।। ३९ ।।**

**सत्यधर्मीयम्–** एवं भगवन्मात्रावगमकत्वेन वेदं अविज्ञाय अहं प्राज्ञ इति मन्यते । लोभाद्दानादिकमेतत्सर्वं प्रवर्तते । स च प्रकर्षेणाज्ञ इति प्राज्ञ इत्यर्थः ।। ३९ ।।

**सत्यात्प्रवच्य[2]मानानां सङ्कल्पा वितथाऽभवन् ।**
**ततो यज्ञः[3] प्रतायेत सत्यस्यानवधारणात्[4] ।। ४० ।।**

**वादिराजीयम्–** ननु ''स्वर्गकामो यजेत'' इत्यादिवेदवाक्यैस्तदनुष्ठान-प्रीततत्तद्यज्ञाधिकृतेन्द्रादिदेवताप्रसादात् प्राप्यस्वर्गादिपुरुषार्थस्य प्रकारान्तरेणापि प्राप्यत्वश्रवणात्किमत्या-याससाध्यसत्यशब्दवाच्यभगवत्प्रसादप्राप्तापरोक्षज्ञान-जनितापवर्ग-पुरुषार्थप्रयासेनेति चेत्– विष्णुसर्वोत्तमत्वज्ञानशून्यान्य-देवतोपासकस्वर्गाद्यभिलाषिमिथ्याज्ञानिजनानुष्ठितज्योतिष्टोमादियागोत्थ-सुकृताप्राप्यसाङ्कल्पिकफलविघातेन तादृशानुष्ठानस्य वैयर्थ्यात्सत्योपासनस्यैव विधेयत्वमुपदिशामीत्याह— **सत्यादिति** । **सत्यात्** उत्तमानन्दज्ञान-पूर्णाद्विष्णोः सकाशात्, विष्ण्वैकनिष्ठलक्षणज्ञानादित्यर्थः। **प्रच्यवमानानां** च्युतिभावं प्राप्यमाणानां पुरुषाणां **सङ्कल्पाः** ''यदि पितृलोककामः'' इत्यादिनोक्ताः श्रौतसङ्कल्पाः **वितथाः** मोघाः अभवन् । ततः उक्तसङ्कल्प-वैयर्थ्यानन्तरं **सत्यस्य** सत्यशब्दाभिधेयस्य ब्रह्मणः **अनवधारणात्** वितथाभिनिवेशाद्धेतोः **कर्म** काम्यफलापादकं काम्यकर्म **प्रभासेत** अज्ञानात्मना रूपेण प्रकाशेत् । ''प्रकाशो ज्ञानमालोको लोको भासश्च

१. श्लोकोऽयं न परिगणितो न व्याख्यातश्च वादिराजश्रीचरणैः ।
२. प्रच्यवेति पाठान्तरम् । ३. कर्मेति पाठान्तरम् । ४. सत्यस्यैवा-वधारणादिति पाठान्तरम् ।

कथ्यते'' इत्यभिधानात् । ''अनेवंवित्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव'' इति, ''यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः'' इत्याद्यनुसारेण अज्ञानाद्यनर्थप्रदमेव भवतीत्यर्थः ।। ४० ।।

**सत्यधर्मीयम्–** सत्याविषयत्वे सत्यस्य वेदस्येयत्यवस्था भवतीत्याह– **सत्यादिति** । **प्रवच्यमानानां** अततात्पर्याकृतवेदानां जनानाम् । सङ्कल्पः यः सोऽपि तथा । प्रच्युतः वन्ध्य इति यावत् । **ततः** सङ्कल्पप्रच्युतेः **यज्ञः** तदादिः **प्रतायेत** तायृ सन्तानपालनयोरिति स्मरणाद्वितततो भवेदित्यर्थः । तत्प्रच्युतिफलापरोक्षज्ञानानुदयादयमनर्थ इत्याह– **सत्यस्य** भगवतः **अनवधारणाद**साक्षात्कारादिति । सत्यस्यैवावधारणादिति पाठे वधारणमवधारणं तदभावोऽनवधारणं तस्मादित्यर्थः । फलतस्तुलता । वष्टि भागुरित्यल्लोपमित्यादेरलोपः ।। ४० ।।

**विद्याद्बहुपठन्तं तु बहुवागिति ब्राह्मणम् ।**
**स एष सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ।। ४१ ।।**

**वादिराजीयम्–** एवं वक्ष्यमाणप्रमाणप्रश्नोत्तरस्य श्लोकद्वयेनानन्तवेदप्रतिपाद्यानन्दचिद्घनविष्णुसर्वोत्तमज्ञानिन एव महापुरुषार्थकथनेन दिङ्मात्रेण प्रदर्शितब्राह्मणोत्तमस्वरूपोऽपि सनत्सुजातस्त्विदानीं धृतराष्ट्रप्रश्नोत्तरत्वेन तल्लक्षणकथनपूर्वकं पात्रोत्तमं स्पष्टीकुर्वन्नादौ बहुवागित्वादिभेदेनानेकविधं ब्राह्मणं कथयति— **विद्यादिति । बहुपठन्तं** बहु त्रित्वाद्यनेकसङ्ख्याविशिष्टत्वेन बहुधा पठन्तं पठमानं, तुशब्दोऽत्रार्थज्ञानं विच्छिनत्ति । अर्थज्ञानशून्यत्वेन त्रित्वादिबहुसङ्ख्याकवेदानां पाठमात्रशीलिनमित्यर्थः । एतादृशं **तं ब्राह्मणं बहुवाक्** अत्र वाक्शब्दः ''यावद्ब्रह्म विष्ठितं तावती वाक्'' इति श्रुत्युक्तप्रयोगेन वेदपरः, न त्वपभ्रष्टवचनपरः । बह्वी त्रित्वादि-

सङ्ख्याका पाठरूपेण वाक् वेदो यस्यासौ स तथा । बहुवेदपाठकोऽयमित्येव **विद्यात्** जानीयात्, पात्रस्वरूपविचारशीलः पुरुषः इति शेषः । 'बहुवाक्' इत्युक्त्या तस्य पात्रोत्तमत्वाभावोऽपि सूचितः ।

ननु तर्हि तस्य अर्थज्ञानाभावेन बहुधा वेदपाठित्वेऽपि 'बहुवाक्' इति शब्दवाच्यत्वे ब्राह्मणशब्दवाच्यं कं वा जानीयामित्यत आह— **य इति। यः** ब्राह्मणः **सत्यात्** ज्ञानानन्दपूर्णाद्विष्णोः सर्वोत्तमत्वज्ञानेन, वैष्णव-दीक्षाग्रहणाच्चेति शेषः । **नापैति** अपयातो न भवति । अत्रापयानं नाम विष्णुसर्वोत्तमज्ञानपूर्वकं तदीयत्वज्ञापनाय तप्तमुद्रधारणादिवैष्णवदीक्षापरित्याग एव । **एषः** एवंलक्षणकः **सः** स वैष्णव एव **त्वया** धृतराष्ट्रनामकेन त्वया **ब्राह्मणः** ब्राह्मणशब्दवाच्य इति **ज्ञेयः** ज्ञातुं शक्यः । 'स' इत्यनेन वेदपाठित्वाभावेऽपि ''अण चेष्टायां'' इति धातोः ब्राह्मं ब्रह्मसम्बन्धिवेदविहितं नित्यनैमित्तिककर्मानुष्ठानात्मककर्मकलापमणते चेष्टत इति तस्यैव ब्राह्मण-शब्दवाच्यत्वं नान्यस्येति ।।

ननु तर्हि बहुवागिति ब्राह्मणमिति बहुधा वेदपाठिनो वैष्णवदीक्षाराहित्येन अवैष्णवशब्दवाच्यस्यापि ''ब्राह्मणं'' इत्युक्त्या ब्राह्मणशब्दस्योभयत्रापि साम्यादस्यैवेति नियमानवकाश इति चेन्न; अत्रापि 'ब्रह्म वेदस्तपस्सत्यं' इत्यभिधानात् ब्रह्म वेदः, तत्र ''अण चेष्टायां'' इति धातुबलादणति पाठसमये अपस्वरादिपाठदोषपरिहाराय उदात्तानुदात्तादि चेष्टत इति ब्राह्मणः इति तच्छब्दवाच्यत्वमित्युक्त्योक्तमेव समञ्जसम् । उक्तं च पद्मपुराणे—

अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा ।
ब्राह्मणस्य तथा वेदात्तप्तमुद्राधिकारिता ।। इति ।

ब्रह्मवैवर्ते–

तप्तचक्रधरं दृष्ट्वा यो वै निन्दति मूढधीः ।
स याति नरकं घोरं यावदाभूतसम्प्लवम् ।। इति ।

तत्रैव—

उच्चवर्णोऽपि यो विप्रो वेदवेदाङ्गपारगः ।
सदाचाररतोऽपि स्याद्विष्णुदीक्षाविवर्जितः ।।
स चोरवद्बहिष्कार्यस्तस्मै दत्तं च निष्फलम्'' इति ।

तथा च शतपथश्रुतिश्च—''स होवाच याज्ञवल्क्यः । तस्मादात्महिताय हरिं भजेत् । सुश्लोकमौलेर्वर्माण्यग्निना सन्दधाति'' इत्यादि श्रुतिस्मृतिभ्यो उक्तमेव सत्यम् ।। ४१ ।।

**सत्यधर्मीयम्–** बहुविद्यापठनमात्रेण न ब्राह्मणः किंतु एतेन गुणेनेत्याह– **विद्यादिति । बहुपठन्तं** आख्यानपञ्चकवेदाध्यायिनं **ब्राह्मणं** आद्यवर्णं बहुवागित्येव विद्यात् । यः **एषः** स्वेछात्मकात् हरेः । ''देवस्यैष स्वभावोऽयम्'' इत्येतद्व्याख्यावसरे एष इच्छारूपस्येति टीकोक्तेः । **नापैति** पठितवेदार्थत्वं तस्मिन्नेवानुसन्दधत्त इति तदनपगमः । स त्वया ब्राह्मणो ज्ञेयः । नजातिर्नच वेदज्ञता तत्वोपयोगिन्यौ किन्तु सत्यानपगम एव तत्वप्रयोजक इति भावः । ''योवा एतदक्षरं विदित्वा प्रैति स ब्राह्मणः'' इति श्रुतिः ।। ४१ ।।

**छन्दांसि नाम द्विपदां वरिष्ठः**
**स्वछन्दयोगेन भवन्ति तत्र ।**
**छन्दोविदस्तेन च तानधीत्य**
**गता हि वेदस्य न वेद्यमार्याः ।। ४२ ।।**

**वादिराजीयम्–** एवं बहुधा वेदपाठिनोऽपि पठितवेदप्रतिपाद्यमुख्यवस्तु-स्वरूपाज्ञानात् ब्राह्मणशब्दानभिधेयत्वमभिधायेदानीं ब्राह्मणोत्तमस्वरूपं वक्तुं ''सत्यस्यैकस्य राजेन्द्र'' इत्यनेन सत्यशब्दवाच्यभगवज्ज्ञानार्थमेव सर्वेषां वेदानां प्रवृत्तिरिति पूर्वोक्तवेदवर्गप्रवृत्तेर्भगवत्परत्वं दर्शयति— **छन्दांसीति ।।** सर्वेषां वेदानां सत्यपरत्वात्सत्यपरित्यागेन कृतसुकृतस्य फलानुदयाच्च सत्यज्ञानमेवाश्यकमित्यतो वाऽऽह— **छन्दांसीति । हे द्विपदां वरिष्ठ!** मनुष्यश्रेष्ठ धृतराष्ट्र! **छन्दांसि** सर्वे वेदाः **स्वच्छन्दयोगे** गुरूपदेशं विना स्वच्छन्देन स्वेच्छयैव योगे पाठाद्युपायप्रयत्ने । क्रियमाणे सतीति शेषः । **तत्र** हरौ **न भवन्ति नाम** न भवन्ति किल । अत्र नामशब्दः किलार्थे । अनेन स्वेच्छयैव वेदपाठादेर्भगवज्ज्ञानजनकत्वं च नास्तीति दर्शितम् । **छन्दोविदः** ये छन्दसां वेदानां गुरुमुखेनैव ज्ञानादिप्रदत्वं, नान्येनेति विदः जानमानाः **आर्याः** ज्ञानवृद्धाः **तेन** गुरुद्वाराभावे भगवत्प्रसादप्राप्त्यभावाख्येन तेन निमित्तेन **तान्** वेदान् **अधीत्य** वेदमुख्यार्थविषयीभूतविष्णु-सर्वोत्तमत्वज्ञानपर्यन्तं सद्गुरुभ्य एवाधीत्य । अत्र चशब्द एवार्थे । **वेदस्य** समस्तवेदवर्गस्य **वेद्यं** ज्ञेयं भगवन्तमेव । अत्रापि चेत्येतदवधारणे । **गताः** ज्ञातवन्तः अभवन् । यद्वा—''गम्लृ गतौ'' इति धातोः भगवन्तं गता इति वा । अत्र हीत्यनेन ''आचार्यदेव विद्या विदिता साऽधिष्टं प्रापत्'' इति श्रुतिप्रसिद्धिं प्रमाणयति ।

अथवा— **हे द्विपदां वरिष्ट! धृतराष्ट्र! छन्दांसि** वेदाः **स्वच्छन्दयोगेन** स्वच्छन्दो मुख्यवृत्तिः तस्याः योगः सम्बन्धः तेन, मुख्यया वृत्येति यावत् । **तत्र** भगवति **भवन्ति नाम** माहायोगेन, विद्वद्रूढ्या च भगवत्प्रतिपादका एव भवन्तीति । **तेन** सर्वेषां वेदानां भगवत्परत्वाख्येन तेन निमित्तेन कारणेन **छन्दोविदः** वेदानां भगवत्परत्ववेत्तारः ये **आर्याः** ते **तान्** वेदान् **अधीत्य**

पाठतोऽर्थतश्चाधीत्य **वेदस्य** ''विद् ज्ञाने'', ''वेदो नारायणः साक्षात्'' इत्यादिना ज्ञानरूपस्य विष्णोः **वेद्यं** ज्ञानैकगम्यं, स्वरूपमिति शेषः, **गताः** प्राप्ता इति वा । हीति प्रसिद्धिः ।।

यद्वा— सर्वेषां वेदानां बह्वर्थपरिबृंहितत्वेन रुचिजननाय बहिर्मुखजनाभिप्रेतार्थोऽपि प्रतिपाद्यत इत्यतो वा तमर्थं दर्शयन्नाह— **छन्दांसीति** । हे द्विपदां वरिष्ठ! **स्वच्छन्दयोगेन** स्वेच्छया पाठादेर्योगेन संयोगेन **छन्दांसि** ''इन्द्र! श्रेष्ठानि'' इत्यादयो वेदाः **तत्र** तत्तत्कर्माधिकृतेषु अमुख्यया वृत्या तत्तत्सूक्तप्रतिपाद्यदेवेषु नाम । नामेति जातावेकवचनम् । ''सप्तसु प्रथमा'' इति प्रथमा षष्ठ्यर्थे । इन्द्राग्न्यादिनाम्नामेव भवन्ति मुख्यत्वज्ञापका भवन्ति । **छन्दोविदः** पाठादिना वेदवेत्तारोऽपि । चेत्यप्यर्थे । **ते** बहिर्मुखाः **आर्याः** वयसा आर्याः अपि **तान्** अमुख्यया वृत्या इन्द्रादिनामपरान् वेदान् **अधीत्य** असद्गुरुमुखादधीत्य **वेदस्य** सर्वस्य वेदवर्गस्य **वेद्यं** मुख्यत्वेन ज्ञातुं योग्यं भगवन्तं **न गता हि** न ज्ञातवन्तो हि ।। ४२ ।।

**सत्यधर्मीयम्–** ''नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति'' इति श्रुतेस्तदेकप्रमाणकं तत्सत्यमित्याह– **छन्दांसीति** । हे **द्विपदाम्** नराणां **वरिष्ठ** श्रेष्ट राजन् **तत्र** सत्ये हरौ **छन्दांसि** वेदाः भवन्ति प्रमापका भवन्ति । हठादाकृष्टा न तत्परा इत्याह– **स्वछन्दयोगेनेति** । अक्लिष्ठं स्वेच्छोपायेन तेन हेतुना **छन्दोविदो** वेदज्ञा आर्याः **तान्** वेदान् **अधीत्य** अधिगम्य **वेदस्य** ज्ञानात्मकस्य **वेद्यम्** यथायोग्यम्, न वेद्यं साकल्येन । तद्ब्रह्म गताः । इदमध्ययनफलमिति । यो भक्त्या सत्यपरतया वेदान् जानन् । तेन च न वेद्यमिति । **न वेद्यम्** अपरतत्वं प्रपञ्चं स गतः पुनः सृतिभाग्भवतीति केचित् ।। ४२ ।।

**न वेदानां वेदिता कश्चिदस्ति**
**[1]वेद्येन वेदं न विदुर्न[2] वेद्यम् ।**
**यो वेद वेदं स च वेद वेद्यं**
**यो वेद वेद्यं न स वेद सत्यम्[3] ।। ४३ ।।**

**वादिराजीयम्–** ननु यदि वेदपाठैर्वेदार्थपरिज्ञानेन च भगवत्प्राप्तिस्तर्हि वेदानां वेदार्थानां च सर्वदा सर्वत्र सत्वात्सर्वेषामपि तत्प्राप्तिप्रसङ्ग इति चेत् बह्वधिकारिविवक्षया विश्वतोमुखस्य वेदस्य विवक्षितार्थपरिज्ञानादिनैव प्राप्तिश्रवणाद्विवक्षितार्थपरिज्ञानस्य च दुरधिगमत्वात् वेदपाठमात्रस्य सर्वत्र सर्वदा सत्वेऽपि तद्वारा तदप्राप्तिरित्याह– **नेति । वेदानां** ''वेदयंतीति वेदाः'' इति प्रमाणात्सर्वार्थपरिज्ञापकानां वेदानां, विवक्षितार्थमिति शेषः, **वेदिता** परिज्ञाता **कश्चित्** यः कश्चिदपि पुमान् **नास्ति** प्रायो नास्ति ।

लक्षणज्ञानपूर्वकं वेदवेत्तृणां प्रत्यक्षसिद्धत्वात्कश्चिदपि नास्तीति कथमुच्यत इति चेत् वेदैः वेदपाठकानां वेदविवक्षितार्थविषयीभूतवस्तुनो अपरिज्ञानात्''न वेदानां वेदिता कश्चिदस्ति'' इत्युक्तिर्न सर्वथा तदपरिज्ञानादिति वदति— **वेदेनेति । वेदेन** लक्षणज्ञानवत्तया पठितेन वेदेन **वेद्यं** वेदैकवेद्यं ''वेदो नारायणः साक्षात् । वेदो वेदविदव्यङ्गः'' इत्यादिप्रमाणात् **वेदं** नारायणं **न विदुर्हि** न ज्ञातवन्तो हि । नन्वेवं चेत्तर्हि कस्यापि ब्रह्मज्ञानानुदयप्रसङ्ग इति चेत्, ''आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्'' इति श्रुतेः, ''ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्'' इत्यादिना बहुष्वेकः कश्चिदधिकारी भगवदनुग्रहप्राप्तश्रवणादिसाधनपरिपाकेन विदितवेद्योऽपि भवतीत्याह— **य इति । यः** ''येति ज्ञानं समुद्दिष्टम्''

१. वेदेनेति पाठान्तरम् । २. विदुर्हीति पाठान्तरम् । ३. वेद्यमिति पाठान्तरम् ।

इति वचनात् यः कश्चिज्ज्ञानात्मा अधिकारिजीवः **स च** स एव वेदैकगम्यं **वेद्यं** नारायणं **वेद** स्वयोग्यतानुसारेण जानाति । यद्वा— यः **वेदं** ऋगादिशब्दशब्दितानां वेदानां मध्ये एकं वा वेदं वेद, सः वेद्यं वेदेतिवा । तर्हि "नाहं वेदैर्न तपसा न ज्ञानेन" इत्यादिना केनापि साधनानुष्ठानेन ज्ञातुमशक्यं विष्णुं कथमधिकारी जीवो जानाति? इति चेत्—"यतो वाचो निवर्तन्त अप्राप्य मनसा सह" इत्यादि श्रुतिबलात् साकल्येनैव तज्ज्ञाना-भावस्योक्तत्वान्न सर्वथा तद्विषयकज्ञानाभावः, किन्तु "नभः पतन्त्यात्मसमं पतत्रिणः" इतिवत्स्वस्वयोग्यतानुसारेण वेदेत्याह— **यः** अधिकारी **वेद्यं** भगवन्तं वेद, सः **सत्यं** निर्दुष्टज्ञानानन्दाद्यनन्तगुणघनं नारायणं न **वेद** साकल्येन न ज्ञातवानेव । "स वेद वेद्यमि"त्यपि पाठेऽप्यमेवार्थः ।।४३।।

**सत्यधर्मीयम्–** तेऽपि वेदा विना तद्दयां न तं वक्तुमीशत इत्यादि-शति– **नेति** । वेदानामिति निर्धारणषष्ठी । तन्मध्ये कश्चिदपि वेदः वेदिता तत्स्वरूपनिरूपणं ज्ञानसाध्यमिति तद्धीनः । अस्ति वर्तते । **वेद्येन** वेदादिनाऽध्येतव्यत्वेन वेद्येन **वेद्यम्** मुख्यं नवेद्यम् अमुख्यवेद्यं प्रपश्चं न विदुः स्वस्वसामर्थ्येन । यः **वेदं** संविदात्मकं भगवन्तं वेद **स** चाधिकारी **अवेदवेद्यं** वेदैरज्ञेयं सर्वथा वेद स सत्यं न वेदैव अजा-नन्नेव । "यतो वाचो निवर्तन्ते । वेदा ह्येवैनम्" इत्यादेः साकल्या-साकल्यावचनवचनपरतया योजने न विरोधगन्ध इति भावः । "यस्या-मतं तस्य मतं मतं यस्य न वेद सः" इत्यादेः । **वेदवेद्यं** वेदः स्वाध्या-योऽध्येतव्य इत्यादिनाऽध्येतव्यत्वेन वेद्यं वेदं वेद । तन्मात्रं वेद स वेदवेद्यं सत्यं न वेद । स्थूलदृश्चैतत्पठनमात्रदत्तचित्त इति न सत्यज्ञ इति वा ।। ४३ ।।

**यो वेद वेद्यं[1] न स वेदवेद्यं**
**न तं विदुर्वेदविदो न वेदाः ।**
**तथापि वेदेन विदन्ति वेदं**
**ये ब्राह्मणा वेदविदो भवन्ति ।। ४४ ।।**

**वादिराजीयम्–** पूर्वस्मिञ्श्लोके 'वेदेन वेद' इति वेदस्यैकवचनोक्त्या अनेकशाखात्मकवेदतरुप्रतिपाद्यस्य श्रीनारायणस्य तद्गतैकशाखाध्ययनमात्रेणैव मोक्षसाधनीभूतपरोक्षापरोक्षज्ञानप्राप्तिरिति प्रतीयते । न च तद्युक्तम् । ज्ञानादिप्रतिपादकऋगादिसर्वशाखाध्ययनजन्यज्ञानस्यैव "सर्ववेदान्तप्रत्ययं चोदनादि" इत्यादिषु तत्प्रापकत्वश्रवणात् जातिविवक्षयोक्तैकवचनाभिप्रायं विविच्यास्मिन्श्लोके दर्शयति– **य इति । यः** अधिकारी **वेदान्** ऋगादीन् सर्वान् वेदान् **वेद** पाठतोऽर्थतश्च जानाति, **स च** स एव **वेद्यं** वेदैकगम्यं भगवन्तं वेद ।

नन्वेवं चेद्वेदैकदेशज्ञानेन भगवत्प्राप्त्यभावेऽपि सर्ववेदाध्ययनेन तत्प्राप्तिप्रसक्तिः स्यादिति चेन्न साकल्येन सर्वापरिज्ञेयमहिम्नो हरेर्गतिः केनापि ज्ञातुं न शक्येत्याह— **नेति । वेदविदः** ऋगादिवेदपञ्चकवेत्तारोऽपि **तं** परिच्छेदशून्यं भगवन्तं **न विदुः** साकल्येन न विदुः । तर्हि शाख्यपेक्षया शाखानामप्रधानत्वाच्चतुःशाखाध्यायिनामपि भगवद्विषयकसाकल्यज्ञानाभावेऽपि बहुशाखिनो वेदतरोर्वा तत्सम्भवादित्यत आह– **नेति । वेदाः** अनन्त वेदाभिमानिनोऽपि तं न विदुः । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतिः, "शब्दो न यत्र पुरु कारकवान् क्रियार्थो मायापरेत्यभिमुखे च विलज्जमाना" इत्यादिबहुश्रुतिस्मृतिभ्यः साकल्येन न विदुरिति ।

---

१. वेदान् सचेति पाठान्तरम् ।

ननु यदि सर्वेषां वेदानां भगवद्विषयकज्ञानाभावस्तर्हि भगवतो वेदैक-गम्यत्वनियमो न स्यादिति चेत्, अनन्तानां वेदानां (वेदाभिमानिनां) साकल्येन भगवत्स्वरूपज्ञानाभावेऽपि स्वयोग्यतानुसारेणैव भगवान्ज्ञेय इत्याह– **तथापीति । तथापि** वेदाभिमानिनां भगवज्ज्ञानसाकल्याभावेऽपि इत्यर्थः । **ये ब्राह्मणाः** परब्रह्मविचारशीलाः **वेदविदः** वेदार्थज्ञानिनः भवन्ति । त एव ब्राह्मणाः **वेदेन** वेदनिर्णीतज्ञानेन **वेदं** नारायणं **विदन्ति** लभन्ते; यथायोग्यं जानन्तीतिवा ।। ४४ ।।

**सत्यधर्मीयम्–** यः **वेद्यं** अमुख्यं प्रपञ्चं **वेदवेद्यं** मुख्यं वेद सः **न वेद** न जानाति । इयती मतिः कुतो न तस्येत्यतस्तदेवमित्याह– वेदविदो वेदाश्च तं न विदुरिति । तथाऽप्येवं सत्यपि ये ब्राह्मणाः वेदेन **वेदं** भगवन्तं विदन्ति अवयन्ति त एव वेदविदो भवन्ति । ये वेदविदो भवन्ति त एव वेदेन **वेदविदो** ब्रह्मप्राप्तिमन्तो भवन्तीति वा । वेदा-श्चोपनिषदस्तासामुपक्रमादिषड्लिङ्गैः सम्यग्विचार्य निर्धारिततदर्थाः सम्भवन्तीति ।। ४४ ।।

**धामांशभागस्य[१] तथाहि वेदा**
**यथा च शाखाहि महीरुहस्य ।**
**संवेदने नैव यथाऽऽमनन्ति**
**तस्मिन् हि नित्ये[२] परमात्मनोऽर्थे ।। ४५ ।।**

**वादिराजीयम्–** ''अनन्ता वै वेदाः'' इत्यनेन भगवद्गुणप्रतिपादकानां वेदानामानन्त्येऽपि ''विष्णोर्नुकं वीर्याणि'' इत्यादिषु तैरेव विष्णोः स्वानुक्ता-नन्तगुणगणपूर्णत्वकथनात्तेनाप्यपरिज्ञातामितगुणगणभरितस्य विष्णोर्गुणानुवादो

१. धर्मांशभाजोऽस्येति पाठान्तरम् । २. सत्ये इति पाठान्तरम् ।

वेदैर्लेशत एव क्रियते न साकल्येनेतीममर्थमस्मिन्श्लोके दृष्टान्तमुखे-नाप्युपपादयति— **धर्मांशभाज इति । वेदाः** अनन्ता अपि वेदाः **अस्य** अनन्तगुणपूर्णस्यास्य विष्णोः **धर्मांशभाजः** तादात्म्योपेताः 'ऐश्वर्यस्य समग्रस्य'' इत्यनेनोक्ता ये धर्माः भगवद्धर्माः ऐश्वर्यादयो भगवन्निष्ठगुणा इत्यर्थः । तेषामंशो माहात्म्यलेशः तं भजन्ते अनुवादरूपेण सेवन्त इति ते तथा । अनेनापरिमितगुणपूर्णस्य विष्णोरेकदेशगुणानुवादकाः न तु समग्रानुवादकाः सर्वे वेदा इत्यर्थो दर्शित इति । तत्र दृष्टान्तमाह– **तथेति । शाखाः** विटपाः **महीरुहस्य** विटपिनः **धर्मांशभाजः** अङ्कुरोत्पत्तिमत्त्व-पादपत्वजीवविशिष्टत्वादयो धर्मा अंशिनो ये धर्माः स्वाभाविकाः गुणाः तेषामंशः जडत्वाद्येकदेशगुणवर्गस्तं यथा भजन्ते चेत्येवार्थे । एवं वेदानां धर्मांशभात्त्वेनाधिकारिणां भगवत्स्वरूपज्ञापकत्वं तेषामेव नान्येषामित्याह— **संवेदनेनेति** । यथा सर्वेषामधिकारिणां योग्यतामनतिक्रम्य **परमात्मनः** सर्वस्वामिनो विष्णोः **संवेदनेन** भगवत्स्वरूपज्ञापनाख्यत्वेन स्वगतेन हेतुना विष्णोः अविनाशिनि **अर्थे** अर्थ्यते सर्वैरित्यर्थः तस्मिन्विष्णावेव **समामनन्ति** पदवाक्यादीनां समन्वयम् आमनन्ति प्रतिपादयन्ति । अनेन सर्वेषां वेदानां विष्णावेव समन्वयो नान्यत्रेति दर्शितमिति ।। ४५ ।।

**सत्यधर्मीयम्–** कथंकारं हरिमुदीरयन्ति वेदा इत्यतस्तन्निदर्शन-प्रदर्शनमाह– **धामांशभागस्येति । धामस्य** चन्द्रमसः धामश्चन्द्र इति हि श्रुतिः । अंशेष्वपि यो **भागो** लेशः प्रतिपत्कला तस्य **संवेदने** प्रतिपत्तौ संपाद्यायां यथा **महीरुहस्य** वृक्षस्य **शाखा** स्कन्धः हेतु-र्भवति । तथाहि तथा **नित्ये** नाशशून्ये परमात्मनः तत्संबन्धिनि । तद्विषयक इति यावत् । **संवेदने** ज्ञानरूपेऽर्थे न वेद उपादीयते । इति यथा सम्यक् आमनन्ति । औपनिषदिकाः कश्चन्द्र इति केनचित्पृष्टाः काश्चिच्छाखां शाखिनः प्रदर्शनमवगमयन्ति तथा वेदा वेदयन्तीश्वरं न

साकल्यत इति भावः । यद्वा **धाम** तेजः तदंशो ह्यर्थाच्चन्द्रस्तस्य भागः प्रतिपत्कला तस्येति । अथवा **धाम्नां** गृहाणां मध्येऽंश एका वीथिका तत्रैको भागोऽपरिचितचरदेवदत्तगृहरूपस्तस्य संवेदने महीरुहस्य शाखा यथा तथेति पूर्ववदुर्वरितम् ।। ४५ ।।

**अभिजानामि ब्रह्माणं व्याख्यातारं विचक्षणम् ।**
**परं हि तत्परं ब्रह्म जानात्येव च[१] ब्राह्मणः[२] ।। ४६ ।।**

**वादिराजीयम्–** एवमपरिमितानन्तगुणगणमण्डितस्य विष्णोरेव सर्वात्मना प्रतिपादका वेदाः, नान्येषामिति सर्वेषां वेदानां भगवत्परत्वं समर्थ्याधुना तेषामेवार्थत्रैविध्यविशिष्टत्वेन बहिर्मुखानामनधिकारिणां मुख्यया वृत्या ब्रह्मेन्द्राद्यन्यदेवतानामेव प्रतिपादकवत्प्रतीयमानानां सर्वेषां वेदवाक्यानां परममुख्यया वृत्त्या भगवद्गुणप्रतिपादकतया प्रवचनशील एव ब्राह्मणोत्तमत्वेन मम सम्मत इति स्वसम्मतिप्रदर्शनपूर्वकं पात्रोत्तमब्राह्मणस्वरूपं कथयति– **अभिजानामीति** । अहं सुनत्सुजाताख्योऽहं **व्याख्यातारं** भगवत्परतया वेदव्याख्यानशक्तिसम्पन्नं **विचक्षणं** वि विशेषेण चक्षते ज्ञानचक्षुषा सर्वान्वेदार्थान्भगवत्परतया प्रेक्षत इति विचक्षणस्तमेव ब्राह्मणं अभिजानामि । अभीत्यव्यवबलात् ब्राह्मणोत्तमं जानामीत्यर्थः । ननु अन्येषामपि ब्राह्मणानां सत्वात्किमिति वेदव्याख्यातुरेव ब्राह्मणोत्तमत्वमाख्यास्यसीत्यत आह— **परमिति** । **ब्राह्मणः** भगवत्परतया वेदव्याख्यानशीलो ब्राह्मणः **तत्** व्याप्तं **परंब्रह्म** परमिति सर्वोत्कृष्टमिति जानाति । एवेत्यधारणबलात्तस्यैव ब्रह्मज्ञानसम्पन्नत्वेनोत्तमब्राह्मणत्वं नान्यस्येत्यर्थः सूचित इति ।। ४६ ।।

---

१. हीति पाठान्तरम् । २. ''यश्छिन्नविचिकित्सः सन् व्याचष्टे सर्व-संशयान्'' इत्युत्तरपादः पाठान्तरम् ।

**सत्यधर्मीयम्–** योऽपि वेदानां वेद परब्रह्मपरतां सोऽपि ब्राह्मण इति ब्रूते– **अभिजानामीति** । **व्याख्यातारं** परंप्रति परतत्वं प्रतिपादयन्तं **विचक्षणं** तत्र कुशलं अहं ब्राह्मणं जानामि । ननु "अथ ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं मौनं च निर्विद्याथ ब्राह्मणः" इत्यादेः कथं कथयस्यभिजानामि ब्राह्मणं व्याख्यातारं विचक्षणमिति तत्राह– **परमिति** । यतः तत् परं ब्रह्म परं यथा तथा जानात्येव स इति ब्राह्मणः । अनेन ब्रह्माणतीति निर्वचनतस्तमहं ब्राह्मणं जानामि न मूढरूढित इति भावः । श्रुतिश्चाचार्यैरेवान्यत्र निर्वेदशब्दस्य नितरां लाभार्थातया सविभक्ति व्यत्यस्यार्थमुक्त्वाऽन्यथा पाण्डित्यादिति स्यादिति विवृतेति ततोऽनुसन्धेयम् । अत्र स्वरव्यत्यासेन ब्रह्माण एव ब्राह्मण इति च ज्ञेयम् ।

अत्र पाठान्तरं "यश्छिन्नविचिकित्सः सन्व्याचष्टे सर्वसंशयान्" इति । तस्यार्थः– यो व्याख्याता छिन्नविचिकित्सः च्छिन्ना विचिकित्सा संशयो यस्य सः सन् । विचिकित्सातु संशय इत्यमरः । स्वयं निवृत्तसंशयश्चेदितरस्य किमित्यत आह – **व्याचष्ट इति** । सर्वसंशयान् श्रोतृहृदि स्थितान् **व्याचष्टे** विवृणोति । अत्र परतत्वव्याक्रियैव परसंशयपराक्रियेति संशयान् दूरीकरोतीति तात्पर्यम् । सर्वेषां श्रोतॄणां संशयान् अन्तर्णीतणिजर्थः सन् सादयन् गमयन् व्याचष्टे स इति वेति ॥ ४६ ॥

**[१]नास्य पर्येषणं गच्छेत्[२] प्रत्यर्थिषु कथंचन ।**
**अविचिन्वन्निमं वेदे ततः पश्यति तं प्रभुम् ॥ ४७ ॥**

**वादिराजीयम्–** एवं पात्रोत्तमब्राह्मणस्वरूपमभिधायेदानीं "अहं वेद्मि

१. तस्येति पाठान्तरम् । २. गच्छेति पाठान्तरम् ।

ब्राह्मणम्'' (अ. ३, श्लो ३८) इति धृतराष्ट्रप्रश्नं परिहरति— **तस्येति** । हे धृतराष्ट्र! त्वं **तस्य** भगवदनुसन्धानज्ञानपूर्वकवेदव्याख्यानशीलस्य **तस्य** ब्राह्मणस्य **पर्येषणं** अन्वेषणं, अन्वेषणलक्षणं सेवनं, **गच्छ** प्राप्नुहि । **प्रत्यर्थिषु** तादृशब्राह्मणविरोधिषु अवैष्णवेषु । 'कथश्चने'त्यत्र पदच्छेदः कथं, च, नेति । कथं दाक्षिण्येन वा, अर्थलोभादिना वा, यथाकथं वा प्रकारेण । पर्येषणमित्येतदत्राप्यन्वेतव्यम् । **न गच्छ** अवैष्णवभजनं न कुरु । **वेदे** वेदज्ञानसम्पन्नत्वेन पात्रोत्तमे ब्राह्मणे **इमं** श्रीनारायणं **अविचिन्वन्** अन्वेषणमकुर्वन् । अनेन भगवत्स्वरूपान्वेषणं सत्सङ्गतिद्वारैव कार्यमिति गर्भार्थः सूचितः ।

यद्वा—'अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्यजन्'' । अत्रैव वेदभारत-पञ्चरात्रेष्वेव पुरुषः पूर्णषड्गुणः श्रीनारायणः मृग्यः अन्वेषणीयः । अन्यत्र पाशुपताद्यागमेषु नेति नेति अन्वेषणीयो न भवति, न भवत्येवेति अतत् मिथ्याभूतपाशुपतादिकुशास्त्रभ्यासं त्यजन् । प्रथमा तृतीयार्थे । मिथ्याशास्त्रं परित्यक्तवता पुरुषेणेत्यर्थः । इत्यादिप्रमाणानुसारेण **वेदे** ऋगादिपञ्चके **इमं** श्रीनारायणं **अविचिन्वन्** अविचारयन् **प्रत्यर्थिषु** सच्छास्त्रप्रतिपक्षि-भूतपाखण्डपाशुपतादिकुशास्त्रेषु **पर्येषणं** तदर्थश्रवणादिपरिकरणेच्छां **कथं च** कथञ्चित्प्रकारेणापि **न गच्छ** मा गाः । **ततः** कुशास्त्रानभ्यासाद्धेतोः **तं** वेदगम्यं **प्रभुं** सर्वसमर्थं नारायणं पश्यति । अपरोक्षेणेति शेषः ।।४७।।

**सत्यधर्मीयम्–** सत्यनिष्ट एव ब्राह्मणोऽतो न विषयविषमः स्यादिति वदति– **नेति** । **प्रत्यर्थिषु** विषयविदूषितत्वेन प्रतिपक्षिप्रायेषु । इन्द्रियेषु सत्सु । **कथंचन** केनापि प्रकारेण **अस्य** भगवतः **पर्येषणं** ज्ञानं न गच्छेत् । अतः **इमं** दुर्विषयं **अविचिन्वन्** अमार्गयन् । **ततः** तन्मार्गणात् । तं **प्रभुं** परमात्मानं वेदे तत्प्रतिपाद्यत्वेन तत्रत्यं **पश्यति**

जानात्यपरोक्षतः । विना विषयेषणं तत्पर्येषणे कृते स हरिर्वेदवेद्यतया तत्रैव प्रकटो भवतीति भावः । **कथंचन** केनापि प्रकारेण प्रत्यर्थिषु सत्सु **ना** पुरुषः **अस्यपर्येषणं** अस्यनां निरस्यानां विषयाणां पर्येषणं वांछां गच्छेत् । **इमं** विषयसङ्गं अविचिन्वन् वेद एव यः **ततः** व्याप्तः तं प्रभुं पश्यतीति वा । वेदे तं प्रभुं पश्यति यः सः **इमं** देहं **अविचिन्वन्** असङ्गृह्णन् पुनः शरीरमनार्जयन् गच्छेत् । मुक्तिमिति शेषः ।। ४७ ।।

**तूष्णींभूत उपासीत नचेच्छेन्मनसाऽपि च ।**
**अभ्यावर्तेत ब्रह्मास्मै बह्वनन्तरमाप्नुयात् ।। ४८ ।।**

**वादिराजीयम्–** एवं सर्वपुरुषार्थसाधनभगवदपरोक्षज्ञानप्राप्तये वेदान्त-शास्त्राभ्यासजन्यविष्णुसर्वोत्तमत्वज्ञानसम्पन्नब्राह्मणोत्तमसेवैव मुख्यसाधनं, नान्यदिति यदुक्तं तदपि वैराग्यसहकृतं महाफलदमिति विधत्ते– **तूष्णींभूतेति ।** साधकः पुरुषः **तूष्णीम्भूतः** फलाभिसन्धिरहितः सन् **उपासीत** सेवेत । श्रीनारायणं, विद्योपदेष्टारं गुरुं वेति शेषः । मनसाऽपि **नेच्छेत्** फलानि नेच्छेत् । मनसाऽपि नेच्छेत् इत्यनेन वाचनिकादौ कैमुत्यन्यायो दर्शितः । चेत्यनेन दुर्विषयानपि इति च सम्बध्यते । **अस्मै** एवंविधायोपासकाय **ब्रह्म** परब्रह्माख्यं वस्तु **अभ्यावर्तेत** अनुग्रहकरणाय अभिमुखेन प्रवर्तते । अनन्तरं भगवता अनुग्रहणाय अभिमुखीकरणानन्तरं **बहु** पूर्णं ब्रह्म वा, यथेष्टानन्दं वैकुण्ठादिकं धाम वा **आप्नुयात्** आप्नोति । ''किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने'' इत्यादिप्रमाणानुसारात् ब्रह्मप्राप्त्यनन्तरं करतलामलकवदनायासेन सर्वपुरुषार्थावाप्तिरसूचि ।

अथवा ज्ञानेच्छोः पुरुषस्य गुरूपसत्तिद्वारेणैव ज्ञाप्राप्तिर्नान्येनेति नियमात्सोपसत्तिरेवादौ कार्येति तत्करणप्रकारमाह– **तूष्णीम्भूतेति ।**

**तूष्णीम्भूतः** विद्यार्थं गुरुकुलवासी स्वानुभूतसुखदुःखादिकमकत्थमानः सन्नेव **उपासीत** सेवेत । गुरुमिति शेषः । मनसाऽपि **न चेच्छेत्** गुरोरप्रियं नेच्छेत । मनसाऽपीत्यनेन अत्रापि कैमुत्यमेव सूच्यते । **अस्मै** एवं गुरूपसत्तिं कुर्वाणायास्मै ब्राह्मणाय **ब्रह्म** वेदविद्या **अभ्यावर्तेत** अनायासेन स्वात्मानं दातुम् अभिमुखेन निवर्तेत । निवर्तत इत्यर्थः । अनन्तरं वेदाभिमानिदेवताप्रसादप्राप्यवेदविद्याप्राप्त्यनन्तरं **बहु** आद्यन्तशून्यं ब्रह्म, तद्विषयकज्ञानं वा आप्नुयात् प्राप्नोतीति ।। ४८ ।।

**सत्यधर्मीयम्–** सकलेन्द्रियोपरमे परमात्मापरोक्षतस्तदवाप्तिश्च भवतीत्याह– **तूर्ष्णीभूत इति ।** बहिरिन्द्रियव्यापारेण शून्य इति तूर्ष्णी भूतः सन् उपासीत । ''मनो दुर्निग्रहं चलम्'' इत्यादेर्मनसाऽपि नेच्छेच्च । एवमुपासकायास्मै **बहु** भगवान् **अभ्यावर्तेत** संमुखं वर्तेत । बहुः पूर्णतायामित्युक्तेः । **अनन्तरं** स्वभिन्नकर्मगुणादिरहितं तत् ब्रह्म अयं आप्नुयात् । तत्फलं तत्प्राप्तिरिति भावः । ''यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्'' इति श्रुतेः ।। ४८ ।।

**मौनान्न[१] स मुनिर्भवति नारण्यवसनान्मुनिः ।**
**अक्षरं तत्तु यो[२] वेद समुनिः श्रेष्ट उच्यते ।। ४९ ।।**

**वादिराजीयम्–** ननु ''ये वा गृहं परित्यज्य वनमेव समाश्रिताः'' । विषयेषु विरागाद्याः मुनयस्ते समीरिताः'' ''पूज्यास्ते मुनयो लोके ब्राह्मणा न्यासिनश्च ये'' इत्यादिनाऽरण्यवासिनामेव पूज्योत्तमत्वकथनात्किमित्युच्यते विषयविरक्त्युपेतवेदविद्यासम्पन्नब्राह्मणस्य पूज्योत्तमत्वमिति चेत्

विष्णुभक्तिपरो यस्तु सदाचाररतः सदा ।
वेदान्तपरिनिष्णातो गार्हस्थ्यपरिपोषकः ।।

१. मौनाद्धीति पाठान्तरम् । २. अक्षरं तु तपो वेदेति पाठान्तरम् ।

विविक्तसेवी लध्वाशी पूज्यो ब्राह्मणसत्तमः ।
नारण्यवासी दुष्टात्मा विप्रः स्वाध्यायशील्यपि ।।

इत्यादिना मनोनैर्मल्यहीनवन्यपेक्षया भावशुद्धज्ञानसम्पन्नगृहाश्रमी ब्राह्मण एव श्रेयानित्याह— **मौनादिति । अरण्यवसनात्** अरण्यसम्बन्धिषु निवसनात् **सः** मनोदोषयुक्तो अरण्यवासी ब्राह्मणः **मुनिः** मुनिशब्दवाच्यो न भवति । तर्हि अरण्यवासिनो ब्राह्मणस्य मुनिशब्दवाच्यत्वाभावे गृहवासिनो ब्राह्मणस्य मुनिशब्दवाच्यत्वं केन हेतुनेति चेत्, मौनादेव मुनिरित्याह— **सः** गृहवासी ब्राह्मणः **मौनात्** मुनिप्राप्याद्विष्णोः सम्बन्धात् **मुनिः** मुनिशब्दवाच्यः भवति । अनेन ब्रह्मज्ञानशून्यस्यारण्यवासमात्रेण ब्राह्मणस्य मुनिशब्दवाच्यत्वमपहसितमिति सूचितम् । यद्वा **मौनात्** वाङ्नियमनरूपात् तूर्ष्णींभावात् । हीति समुच्चये । अरण्यवसनाच्च गृहादिषु निवसनाच्च सः मौनेनारण्यवासशीलो **मुनिः** मुनिशब्दवाच्यो न भवति । तर्हि मुनिशब्दवाच्यः क इति तत्राह– **अक्षरमिति** । यः ब्राह्मणः

विष्णुमुद्दिश्य यत्कर्म विष्णुप्रीत्यर्थमेव च ।
क्रियते कार्यमित्येव तदानन्त्याय कल्प्यते ।।

इत्युक्तविधिनाऽऽचरितस्यैव कर्मणोऽक्षरतपःशब्दवाच्यत्वं, ''तपो भवति केवलम्'' इत्यपि चोक्तत्वादेवंविधं अक्षरं तपः वेद । कर्तुमिति शेषः । **सः** स एव ब्राह्मणः **मुनिश्रेष्ठः** मुनिशब्दवाच्यानां श्रेष्ठः, मुनिश्चासौ श्रेष्ठश्चेतिवा **उच्यते** शास्त्रेषु मुनिश्च पठ्यत इति ।। ४९ ।।

**सत्यधर्मीयम्–** तूर्ष्णीभूत इत्युक्तं मौनं तथा च न वासादिकं न च मुनित्वं प्रयोजकं चेदमिति वदति – **मौनादिति । सः** अधिकारी मौनी तस्मादेव **मुनिः** अपरोक्षज्ञानी न भवति । न भवति चारण्यवसनादपि

मुनिः । तदक्षरं ब्रह्म यो वेद । स श्रेष्ठः मुनिरुच्यते । मौनाद्धि समुनिरिति । मौनात् मुनिरेव भवति । अरण्यवसनादिति तु पूर्ववत् । यस्त्वक्षरं तत्वतः वेद । स श्रेष्ठो मुनिः मौनमात्रात् मुनित्ववद-पेक्षयाऽधिको मुनिर्भवतीति वा । अरण्ये वसनात् । ल्यब्लोपनिमित्तेयं पञ्चमी । अरण्येति सुधासमुद्रवसतिं प्राप्य मुनिः श्रेष्ठो मुक्तो भवती-त्यप्यावृत्याऽर्थोऽवसेयः । अरश्चह वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभि-मतप्रदौ द्वाविति श्रुतिः । कश्चिन्न मौनान्मुनिर्भवति कश्चिदरण्यवसनात् । श्रेष्ठो मुनिश्चाक्षरं यो वेद स इति वार्थ इति केचित् । "ये त्वक्षर-मनिर्देश्यमव्यक्तं पर्युपासते" इत्यादेः यस्त्वक्षरं वेद समुनिः परिचारकी-कृतप्राक्तनमुनिसहितः पूर्वं विद्यमानमुनिपदाकर्षः । श्रेष्ठो मुनिर्भवतीति वा ।। ४९ ।।

**सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते ।**
**तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ।। ५० ।।**

**वादिराजीयम्–** लोके शब्दशास्त्रचतुराणामेव सर्वशब्दार्थव्याकरणा-द्यधिकरणोक्तेरभावाच्च वैयाकरणशब्दवाच्यत्वेन तेषामप्युत्तमब्राह्मणत्वात्कथ-मक्षरतपोवेदिनामेवोत्तमत्वमित्याशङ्क्य तदपि वैयाकरणशब्दार्थनिष्पत्तिकथने-नेत्येतदपाकरोति– **सर्वार्थानामिति** । ननु शब्दशास्त्रपटूनां वैयाकरणानामपि ब्राह्मणोत्तमत्वस्योक्तत्वात्कथमुच्यते अक्षरतपोवेदिनामेवोत्तमत्वमिति चेन्न शब्दशास्त्राभ्यासमात्रेण ब्राह्मणस्योत्तमत्वं; अपितु "शब्दस्य हि ब्रह्मणः एष पन्थाः" इत्याद्यनुसारेण सर्वस्यापि शब्दब्रह्मणः परब्रह्मविषयीकरणसमर्थानामेव वैयाकरणानां ब्राह्मणानामुत्तमत्वमिति कथनेन वैयाकरणानामपि अक्षयतपो-वेदिष्वेवान्तर्भाव इति सूचयन् शङ्कामपाकरोति– **सर्वार्थानामिति** ।

**सर्वार्थानां** सर्वशब्दार्थानां **व्याकरणात्** "विः पक्षिपरमात्मनोः"

इत्यभिधानात् वौ हरौ आ सम्यक् करणात् विषयीकरणात् वैयाकरण इत्युच्यते । न तु शब्दशास्त्रमात्राध्ययनबलाच्छब्दमात्रव्याकरणात् । कोऽयं नियम इति चेत्, सर्वशब्दार्थनिष्पत्तिकरणसमर्थव्याकरणशब्दवाच्यशब्द-शास्त्रस्यापि वेदैकमूलत्वादित्याह– **तन्मूलत इति । व्याकरणं** सर्वशब्दानां यथास्थितार्थस्पष्टीकरणम् । शब्दशास्त्रस्येति शेषः । 'शब्दो न यत्र पुरुकारकवान्क्रियार्थे' इत्यादिना **तन्मूलतः** शब्दब्रह्माख्यवेदमूलत एवेति हेतोरयं नियम इत्यर्थः । तस्मात् तत् वेदाख्यं शब्दब्रह्मैव **तथा** मुख्यतया व्याकरणशब्दवाच्यं, नान्यदिति । अनेनानन्तत्वान्मुख्यतया सर्वशब्दार्थनां स्पष्टीकरणसामर्थ्योपेतत्त्वात्तदितरव्याकरणशब्दवाच्यशास्त्रस्य तन्मूलत्वात्सर्वत्र विष्ण्वैकविषयत्वाच्च मुख्यतो व्याकरणशब्दवाच्यत्वं वेति हेतोस्तदर्थज्ञानवानेव ब्राह्मणोत्तमो व्याकरणशब्दशब्दितो, न तु तद्राहित्येन प्रसिद्धव्याकरण-शब्दवाच्यशास्त्राभ्यासपाटवेन शब्दार्थव्याकरणशीलो ब्राह्मणो वैयाकरण इति निरणायीति ।। ५० ।।

**सत्यधर्मीयम्–** पूर्वोक्तो मुनिरेव वैय्याकरण इत्याह– **सर्वेति । तन्मूलतः** पूर्वोक्ताक्षरसंज्ञकपरमात्मनः सकाशात् व्याकरणं हि सर्वस्य जगतो भवति । तस्मात्तदक्षरं व्याकरोतीति व्युत्पत्या व्याकरणं भवति । तथा च श्रुतिः– "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरणवाणि" इति । तथा च मुख्य-व्याकरणं भगवत्प्रसादान्निमित्तादक्षरमपि ब्राह्मणो मुनिः सर्वार्थानां ज्ञानतो विस्तरणान्निमित्ताद्वैय्याकरण उच्यते । अनेन द्वाभ्यां पदान्ताभ्यामिति वैयाकरणशब्दनिरुक्तिरप्युक्तपरतत्वाख्यव्याकरणमधीत इत्यधिकृत्यैव प्रवृत्ता न पुनः शब्दैकदेशव्याकरणादित्युक्तं भवति ।। ५० ।।

**प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।**
**सत्ये वै ब्राह्मणस्तिष्ठंस्तद्विद्वान् सर्वविद्भवेत् ।। ५१ ।।**

**वादिराजीयम्–** ननु ब्राह्मणस्य व्याकरणशब्दवाच्यवेदार्थानां भगवत्परतया प्रतिपादनेन किं फलमुदेष्यतीति चेत्, स्वबिम्बापरोक्षज्ञान-पूर्वकस्वस्वरूपाभिव्यक्तिद्वारा यथायोग्यसर्वापरोक्षज्ञानफलमुदेष्यतीत्याह– **प्रत्यक्षदर्शीति । प्रत्यक्षदर्शी** साक्षात्कारेण भगवन्तं पश्यतीति प्रत्यक्षदर्शी, अपरोक्षज्ञानीत्यर्थः । **नरः** ''रीङ्क्ष्ये'' इति धातोः न रीयत इति नरः, अहीयमानो ज्ञानी पुरुषः **लोकानां** ''लोकस्तु भुवने जने'' इत्यभिधानात् अज्ञजनानां **सर्वदर्शी** विषयोपरक्तमनस्कत्वेन क्रियमाणं सर्वं समग्रं यदशुभजातं तज्ज्ञानचक्षुषा पश्यतीति सर्वदर्शी **भवेत्** एवं विधो भवेत् ।

यद्वा **प्रत्यक्षदर्शी** स्वात्मनः प्रत्यक्षेषु चक्षुःश्रोत्रादिप्रतिप्रतीन्द्रियेषु ''बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षितो ये'' इत्यादिना भगवदाराधनत्वेनैव पश्यति, न तु भोगसाधनत्वेनेति प्रत्यक्षदर्शी । **लोकानां** जनानामन्तर्यामित्वेनेति शेषः । **सर्वदर्शी** ''सर्वं समाप्नोषि ततोऽसि सर्वः'' ''सर्वः शर्वः'' इत्यादिना सर्वशब्दवाच्यं भगवन्तं ''सर्वत्र विदितात्मनाम्'' इत्यनेन स्वात्मनो अपरोक्षज्ञानित्वात्सर्वाधिष्ठानगतभगवदाराधनयोग्यत्वेन ''अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'' इत्यनुसारेण सर्वशब्दवाच्यं सर्वान्तर्यामिणं श्रीनारायणं पश्यतीति सर्वदर्शी भवेत् । वैयाकरणः स एव भवेत् नान्य इति यस्मात्सर्ववेदार्थानां भगवत्परार्थकथनेनैव प्रत्यक्ष-दर्शित्वादिप्राप्तिः **तत्** तस्माद्धेतोः **सत्ये** ''सत्यं परं धीमहि'' इति सत्य-शब्दवाच्ये भगवत्येवेति । वा इत्यवधारणे । **तिष्ठन्** ''एकान्तानां न कस्यचित् । अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम् ।'' इत्येवम्भावनया

तिष्ठन् **विद्वान्** ज्ञानी **ब्राह्मणः सर्ववित्** भूतभविष्यदादित्रैकालिक-यथायोग्यसर्वविषयकज्ञानवानपि भवेत् ।। ५१ ।।

**सत्यधर्मीयम्–** सर्वज्ञत्वेन लोके लोकैः सम्मतोऽपि न मम सम्मतोऽयमिति वदति – **प्रत्यक्षदर्शीति** । यो **लोकानां** लोकान् भूरादीन् प्रत्यक्षेण पश्यतीति स तथा । यद्वा लोकान् आमिति पदच्छेदः । आमित्येवमर्थे । ततश्चैवं योजना– एवं सर्वदर्शी भवेदिति । तथोक्तं तलवकारटिप्पण्यां श्रीसत्यप्रियतीर्थगुरुराजकृतायां सर्वेष्टदात्रे देवानां इति व्याख्यावसरे आमेवं स्वयमात्मनेत्यमर इति । योगज-प्रत्यासत्या सः सर्वदर्शी भवेत् । औपचारिकसर्वज्ञत्वको भवेत् । **ब्रह्मणः** षष्ठी सप्तम्यर्थे । तथा च ब्रह्मणि **सत्ये** तल्लक्षणे तिष्ठन् तत्र स्थिरीकृतान्तरः तदक्षरं विद्वान् स सर्वविद्भवेत् । निरुपचरितसर्वविदय-मित्यर्थः । यद्वा ब्रह्मणः वेदसम्बन्धिनि सत्ये हरौ तिष्ठन्निति ।। ५१ ।।

**ज्ञानादिषु[1] स्थितोऽप्येवं क्षत्रिय[2] ब्रह्म पश्यति ।**
**वेदानां चारपूर्वेण[3] चैतद्विद्वन्[4] ब्रवीमि ते ।। ५२ ।।**

**।। इति श्रीमन्महाभारते शतसाहस्र्यां संहितायाम् उद्योगपर्वाणि सनत्सुजातीये द्वितीयोऽध्यायः समाप्तः ।।**

**वादिराजीयम्–** न केवलमेवंविधभगवद्विषयकज्ञानभक्त्यादिसाधनानुष्ठाने ब्राह्मणानामेव महानिष्टनिवर्तकत्वं, अपितु एवं क्षत्रियोऽपीति कथनेन क्षत्रजात्युत्पन्नस्यापि महानर्थनिवर्तये इदमेव साधनं, नान्यदिति हेतोस्तवापि सद्गन्धर्वांशित्वेन महाधिकारित्वात्स्वोत्तमयुधिष्ठिरादिद्वेषजनितमहानर्थनिवर्तये मयोक्तमेव साधनं नान्यदिति ज्ञात्वैतदेव सम्पादयेत्युपसंहारमुखेनाध्यायान्ते

१. धर्मादिष्विति पाठान्तरम् । २. क्षत्रिय इति पाठान्तरम् । ३. चानुपूर्वेणेति पाठान्तरम् । ४. एतद्विद्वानिति पाठान्तरम् ।

धृतराष्ट्रमुपदिशति— **ज्ञानादिष्विति । ज्ञानादिषु** ज्ञानं परोक्षापरोक्षविषयं, तदेव आदिर्येषु भक्तिवैराग्यादिषु **स्थितः** निष्णातः **एवं** ज्ञानादिगुण-सम्पन्नब्राह्मणवत् **विद्वान्** स्वविहितज्ञानवान् **क्षत्रियः** क्षत्रियकुलोत्पन्नोऽपि । ब्राह्मणापेक्षया क्षत्रियस्य नैच्यत्वदर्शनायात्रापिशब्दः । **वेदानां** सर्वेषां वेदानां **चारपूर्वेण** "चर गतिभक्षणयोः" इति धातोः चारो वेदार्थविचारः, स एव पूर्वः सकलसाधनाग्रवर्ती यस्य कर्मणस्तेन साधनानुष्ठानेन **ब्रह्म** परंब्रह्म पश्यति । अपरोक्षेणेति शेषः । **एतत्** इदमेव साधनं **ते** धृतराष्ट्रनाम्नस्तवापि **ब्रवीमि** महानर्थकत्वेनावश्यविधेयमित्युपदिशामीति ।। ५२ ।।

**।। इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातीये**
**श्रीवादिराजतीर्थविरचिते विषमवाक्यप्रकाशे द्वितीयोऽध्यायः ।।**

**सत्यधर्मीयम्–** यस्त्वेतेभ्य इत्यादिनोक्तमर्थं दार्ढ्यार्थं पुनर्दर्शयन्नुप-संहरति– **ज्ञानादिष्विति ।** ज्ञानं चेत्यादिना पूर्वोक्तेषु स्थितः । धर्मादि-ष्विति पाठे "धर्मश्च सत्यम्" इत्याद्युक्तद्वादशसु तथा सत्याद्यात्मकेऽष्ठ-विधेचाप्रमादे स्थितः **वेदानां** वेदान्तानां चारो विचारः पूर्वो यस्य साधनस्य तेन । चानुपूर्वेणेति पाठे क्रमाद्बाह्यार्थत्याजनपूर्वकं मनोयोजने-नेत्यर्थः । **ब्रह्म पश्यति** अपरोक्षतो जानाति । तं सुमुखीकर्तुं विद्वन् क्षत्रियेत्युक्तिः । तथापि तेऽहं ब्रवीमि । एतद्बुध्वा ब्रवीमीति पाठः स्फुटार्थः । अत्र मद्बुद्धमेवोच्यते नत्वबुद्धं वञ्चन येति ध्वनितं भवति ।। ५२ ।।

**।। इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वाद्यनेकगुणसंपन्नश्रीम-**
**द्रामचन्द्रदेवदिव्यपादपद्माराधकश्रीमत्सत्यवरतीर्थश्रीपादकरकमलसञ्जात-**
**श्रीमत्सत्यधर्मयतिकृतायां व्याख्यायां श्रीमदुद्योगे**
**सनत्सुजातीये द्वितीयोऽध्यायः ।। २ ।।**

# अथ तृतीयोऽध्यायः

धृतराष्ट्र उवाच–

**सनत्सुजात यदिमां परार्थां**
**ब्राह्मीं वाचं वदसि[२] हि विश्वरूपाम् ।**
**पराहि कार्येषु सुदुर्लभां कथां**
**प्रब्रूहि मे वाक्यमेवं[३] कुमार ।। १ ।।**

**वादिराजीयम्**– सर्वेषामाश्रमाणां तद्धर्माणां च ब्रह्मचर्याश्रममूलत्वा-द्ब्रह्मचर्यस्याश्रमेषु प्राथमिकत्वाद्गुरुकुलवासादिना ब्राह्मणादीनां ब्रह्मज्ञानसाधनं प्रथमं ब्रह्मचर्याश्रमधर्मानुष्ठानमेवेति तत्प्रतिपाद्यतेऽस्मिन्नध्याये । तत्रादावतीता-ध्याये सनत्सुजातोक्तिप्रशंसापूर्वकं स्वाभिप्रेतं पुनस्तमेव पृच्छति धृतराष्ट्र इत्याह— **सनत्सुजातेति** । हे सनत्सुजात! कुमारेति तस्यैव विशेषणम् । कुं कुत्सितं, संसारमन्यथाज्ञानं च स्वोपदिष्टब्रह्मज्ञानेन मारयतीति कुमार! पञ्चवार्षिककौमारवयोविशिष्टवद्दृश्यमानत्वाद्वा कुमारेति । तत्र प्रमाणम् "पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः" इति ।

**इमां** परापरतत्वविषयां **परार्थां** "परोऽरिपरमात्मनोः" इत्यभिधानात् परो विष्णुः स एव मुख्यप्रतिपाद्यार्थविषयो यस्याः सा तथा ताम् । **विश्वरूपां** बह्वर्थप्रतिपादनसामर्थ्योपेतत्वेन विश्वतो मुखां **कार्येषु** कर्तुं योग्येषु नित्यनैमित्तिकादिषु श्रौतकर्मसु **परां** अन्यार्थविषयां **सुदुर्लभां** अल्पज्ञेष्वस्मदादिषु सुखेन लब्धुमशक्यां एवंविधां **ब्राह्मीं** ब्रह्मशब्दवाच्य-वेदार्थसम्बन्धिनीं वाचं उपदेशरूपवाचं **वदसि** मां प्रति वदसि **यत्** इति यत् अत एवं सुखसाध्यमेवंविधं वाक्यं प्रब्रूहि । ममेति शेषः । "वाच्यमेक-

१. वदसे विश्वेति पाठान्तरम् । २. वाच्यमेकमिति पाठान्तरम् ।

मिति'' पाठे तु **वाच्यं** मादृशानामज्ञानां वक्तुं योग्यं **एकं** निर्णीतार्थविषयत्वे अन्ययोगव्यवच्छेदशून्यं वाच्यं मे प्रब्रूहीति ।। १ ।।

**सत्यधर्मीयम्–** तदावेदितब्रह्मचर्यादिसाधनं श्रुत्वेदानीं तद्वेदनाकाङ्क्षी धृतराष्ट्रः पृच्छति– **सनत्सुजातेति** । हे सनत्कुमार **यत्** यस्मात् **इमां परार्थां** पर उत्तमोऽर्थो यस्याः सा ताम् । त्वं तु विदिततत्व इति परार्थामितरार्थसाधिकामिति वा । **ब्राह्मीं** परब्रह्मसम्बन्धिनीं तत्प्रतिपादिकामिति यावत् । वाचं वदसि । वदस इति पाठे भासनोपसम्भाषेत्यादिना तङ् । सप्रकाशो वदसीत्यर्थः । **विश्वरूपां** नानारूपां बह्वर्थगर्भामिति यावत् । **परां** इतरवाग्विलक्षणां **कार्येषु** लोकैः क्रियमाणेषु कर्मसु **सुदुर्लभां** दुर्मिलां एवं वक्तारो न सन्ति जगतीति भावः । मे मामुद्दिश्य । वाक्यं तादृक्पुनः प्रब्रूहि मे प्रार्थनारूपं वाक्यं प्रति कथां प्रब्रूहि उत्तरं वदेति वा ।। १ ।।

**सनत्सुजात उवाच–**

> **नैतद्ब्रह्म त्वरमाणेन लभ्यं**
> **यन्मां पृच्छस्यभिषङ्गेन[१] राजन् ।**
> **बुद्धौ प्रलीने मनसि प्रचिन्त्या**
> **विद्या हि सा[२] ब्रह्मचर्येण लभ्या ।। २ ।।**

**वादिराजीयम्–** एवं बहुना कालेन बह्वायाससाध्यब्रह्मज्ञानस्याल्पायाससाध्योपायं धृतराष्ट्रेण पृष्टः सनत्सुजातमुनिः ब्रह्मज्ञानं ब्रह्म च त्वरावता न लभ्यं किन्तु ''मन एव मनुष्याणां कारणं बन्धमोक्षयोः'' इत्यनेन भगवन्निष्ठासम्पन्नस्वमनोजयपूर्वकाहिंसासहकारिब्रह्मचर्याख्यसुलभप्रयत्नप्राप्यमिति वक्ति– **नेति** । **हे राजन्!** धृतराष्ट्र! **अनुषङ्गेण** स्नेहेन, ''स्नेहो

१. अनुषङ्गेणेति पाठान्तरम् । २. अहिंसेति पाठान्तरम् ।

भक्तिरिति प्रोक्तः'' इत्युक्तत्वाद्भक्त्येति यावत् । ब्रह्म पृच्छसि । त्वरया प्राप्तुमिति शेषः । **एतत्** त्वया प्राप्यत्वेन पृष्टं एतत् **ब्रह्म** परंब्रह्म **त्वरमाणेन** त्वरां कुर्वता पुरुषेण **न लभ्यं** न प्राप्यम् । किन्त्वत्वरारूप-प्रयत्नेनैव । यथा ब्रह्मप्राप्तौ महान्प्रयत्नस्तथा ब्रह्मविद्याप्राप्तवपीत्याह– **बुद्धाविति । बुद्धौ** बोधरूपत्वाद्बुद्धिर्विष्णुस्तस्मिन् **मनसि** स्वमनसि **लीने** प्रत्यक्षविषये सति **प्रचिन्त्या** अनरवतविचारेण विचारणीया **विद्या** ब्रह्मविद्या । ब्रह्मविद्याप्राप्तौ साधनान्तरं चाह– **अहिंसेति ।** अहिंसाब्रह्मचर्येण अहिंसाकृतब्रह्मचर्याख्यप्रयत्नेन **लभ्या** लब्धुं योग्या, नान्येन प्रयत्नेनेति ।। २ ।।

**सत्यधर्मीयम्–** एवं पृष्टः प्राह भगवानित्याह **नेति ।** यत् मां पृच्छसि **एतत्** वक्तव्यत्वेन प्रार्थितम् । ''एतत्सन्निहितत्वात्तु'' इति ऐतरेयभाष्योक्तेः सन्निहितं ब्रह्म त्वरमाणेन अधिकारिणा **नैव लभ्यं** प्राप्यं न । **अभिषङ्गः** आक्रोशस्तेन आग्रहेणेति यावत् । ''अभिषंगोऽथ शपथः स्यादाक्रोशे पराभवः'' इति विश्वः । तर्हि कथं कथय सा लभ्येत्यत आह– **बुद्धाविति ।।** इतरेषामिन्द्रियाणामुपरमेऽपि नोपरमो मनस इति तस्मिंत्संकल्पविकल्पाद्यात्मके मनसि **बुद्धौ** अध्यवसाय-रूपिण्यां **प्रलीने** सति अस्वव्यापार इति यावत् । यमर्थं गोचरयति बुद्धिस्तदनुसारेण मनसि वर्तमाने । **प्रचिन्त्या** प्रगतं चिन्त्यं यस्यां सा। चिन्तनीयवस्त्वन्तरहिता या सा विद्या । सा तु ब्रह्मचर्येण गुरुकुलवासादिना लभ्येति दुर्लभेति भावः ।। २ ।।

**अविद्यामाद्यां[१] वदसि हि सत्यरूपां**
**या प्राप्यते ब्रह्मचर्येण सद्भिः ।**

१. विद्यामाद्यामिति पाठान्तरम् ।

**यां प्राप्यैनं[1] मर्त्यलोकं त्यजन्ति**
**या वै विद्या गुरुवृद्धेषु[2] नित्या ।। ३ ।।**

**वादिराजीयम्–** "विद्ययाऽमृतमश्नुते, ज्ञानवान् मां प्रपद्यते" इत्यादिना परब्रह्मप्राप्तौ विद्यैव मुख्यसाधनं तत्साधनं ब्रह्मचर्यमित्यादि कथयति— **आद्येति** । हे धृतराष्ट्र! **सत्यरूपां** सत्यो विष्णुः, तं रूपयति निरूपयतीति सत्यरूपा ताम् । अविनाशिस्वरूपामिति वा । **आद्याम्** आ समन्तात् द्योतत इति आद्या ताम् । **विद्याम्** एवंविधां विद्यां **वदसि** उपदिशेति कथयसि । या सा विद्या **सद्भिः** सज्जनैः **ब्रह्मचर्येण** ब्रह्मचर्याश्रमधर्मेण **प्राप्यते** लभ्यते । **एनां** मयोच्यमानां **यां** यां विद्यां **प्राप्य** लब्ध्वा **मर्त्यलोकं** मनुष्यलोकम् । मानुषदेहं वा **त्यजन्ति** परित्यजन्ति । तर्ह्येवंविधा विद्या केषु निष्ठेत्यत आह— **येति** । **या** मयोच्यमाना विद्या **गुरुवृद्धेषु** गुर्वनुग्रहेणोत्तमत्वं प्राप्तेषु, गुर्वनुग्रहाभिवृद्धेष्वित्यर्थः । **नित्या** सनातना ।।३।।

**सत्यधर्मीयम्–** या विद्या सद्भिः ब्रह्मचर्येण प्राप्यते तां **आद्यां** आदिभूताम् । **अवित्** अज्ञः यां न लभते । वदसि **सत्यरूपां** सत्यं ब्रह्म रूपयति प्रतिपादयतीति सा ताम् । यां च प्राप्य एनं **मर्त्यलोकं** मरणधर्मदेहम् । त्यजन्ति पुनरनुसरेन्न यथा तथा त्यजन्ति । सा क्व वर्तते सदेत्यत आह– **यावा इति** । गुरुभिर्वृद्धा वर्द्धिताः शिष्यास्तेषु **नित्या** नियमेन सती । गुरुवृत्तेषु नित्येति पाठे गुरु महत् वृत्तं येषां तेषु । सस्त्विति यावत् । विद्यामाद्यामिति पाठः सरलो विरलार्थश्च ।। ३ ।।

धृतराष्ट्र उवाच–

**ब्रह्मचर्येण या विद्या शक्या वेदितुमञ्जसा ।**
**तत्कथं ब्रह्मचर्यं स्यादेतद्विद्वन् ब्रवीहि मे ।। ४ ।।**

१. प्यैनामिति पाठान्तरम् २. गुरुवृत्तेष्विति पाठान्तरम् ।

**वादिराजीयम्–** परब्रह्मप्राप्तिसाधनीभूतायाः ब्रह्मविद्यायाः ब्रह्मचर्याचरणेन प्राप्तिरिति श्रुतब्रह्मचर्यमहिमा धृतराष्ट्रस्त्वादौ ब्रह्मचर्यलक्षणं पृच्छति– **ब्रह्मचर्येणेति** । हे महामुने! सनत्सुजात! त्वयोदिता **विद्या** ब्रह्मविद्या **ब्रह्मचर्येण** ब्रह्मचर्याख्योपायेन **अञ्जसा** सम्यक्त्वेन **वेदितुं** परिज्ञातुं शक्या । चेदिति शेषः । तर्हि ब्रह्मविद्यासाधनीभूतस्य ब्रह्मचर्यस्यैव लक्षणमादौ विजिज्ञास्यामीति पृच्छति– **तदिति** । **तत्** त्वयोदितं ब्रह्मविद्यासाधनं **ब्रह्मचर्यं कथं** केन प्रकारेण **स्यात्** ब्रह्मचर्याख्यं सद्विद्याप्रापकं स्यात् ? तथा **एतत्** ब्रह्मचर्यलक्षणं **ब्रूहि मे** ब्रूहीति ।। ४ ।।

**सत्यधर्मीयम्–** आद्याविद्या वेद्या ब्रह्मचर्यादिमतेति श्रुत्वा एतत्स्वरूपं निरूपयेति पृच्छति – **ब्रह्मचर्येणेति** ।। या विद्या ब्रह्मचर्येण अंजसा वेदितुं सा शक्येत्युक्तं किल । **तत्** ब्रह्मचर्य **कथं** केन प्रकारेण संपादितं स्यात्तद्ब्रूहि । न मम तन्मतिरिति न वदेति तथा सम्बोधयति **एतद्विद्वन्निति** ।। ४ ।।

**सनत्सुजात उवाच–**

> **आचार्ययोनिमिह ये प्रविश्य**
> **भूत्वा गर्भं ब्रह्मचर्यं चरन्ति ।**
> **इहैव ते शास्त्रकारा भवन्ति**
> **विहाय देहं परमं यान्ति सत्यम् ।। ५ ।।**

**वादिराजीयम्–** एवं धृतराष्ट्रेण पृष्टः सनत्सुजातः ब्राह्मणकुलोत्पन्नस्य पुरुषस्य वैदिकसंस्कारसम्बन्धिब्राह्मणत्वप्रापक ''मैत्रो ब्राह्मण उच्यत'' इत्यादिप्रमाणप्रमितमित्रदेवताकगायत्र्युपदेशलक्षणककेवलब्रह्मचर्याश्रमप्राप्तिमात्र एव परविद्याप्रापकब्रह्मचर्यप्राप्तिर्न ह्यपितु ब्राह्मणत्वप्राप्त्यनन्तरं गुरुकुलवासद्वारा

सेवाप्रसन्नगुर्वनुग्रहसम्पादनपूर्वकं जितेन्द्रियत्वादिना यावद्वर्षमादौ ब्रह्मचर्य-प्राप्तिसाधनं तत्फलं चाह— **आचार्ययोनिमित्यादिना** । **इह** अधिकारिवर्गे **ये** अचार्ययोनिं प्रविश्य गर्भं भूत्वा गर्भवत्प्रियतमो भूत्वा **ब्रह्मचर्यं** गुह्येन्द्रियनियमनादिव्रतं चरन्ति त **इहैव** एतस्मिन्नेव जन्मनि **शास्त्रकाराः** शास्त्रकर्तारः सर्ववेदाद्यर्थप्रतिपादकग्रन्थकर्तारो भवन्ति । ते **देहं** चरमदेहं विहाय **परमं** उत्तमं, निर्दोषज्ञानानन्दानुभवं **सत्यं** परब्रह्म यान्तीति यावत् ।। ५ ।।

**सत्यधर्मीयम्–** एवं धृतराष्ट्रेण पृष्टः सनत्सुजात आह– **आचार्येति** ।। ये **आचार्ययोनिं प्रविश्य** तद्रूपभाविकार्यकारणसमीपं गत्वेति यावत् । **गर्भं** तत्वं तदर्भकत्वमिति यावत् । **भूत्वा** प्राप्य । गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टक इति विश्वः । **ब्रह्मचर्यं** तच्छुश्रूषादिकं च कुर्वन्ति । **इहैव** भूलोक एव । **शास्त्रकाराः** शास्त्राणि कुर्वन्तीति ते तथा भवन्ति । प्रारब्धक्षयानन्तरं देहं **विहाय** त्यत्का **परमं सत्यं** ब्रह्म यान्ति । इहैव प्रवेश इहैव शास्त्रकर्तृत्व-मनन्तरं देहान्तरमलब्ध्वा प्रारब्धध्वंसे गुरुसेवया सत्यं परमं ते यान्तीति न प्रतारक्युक्तिः किं त्वेतत् **सत्यं** नानृतमित्यर्थः ।। ५ ।।

**अस्मिन् लोके वै जयन्तीह[१] कामान्**
**ब्राह्मीं स्थितिमनुतितिक्षमाणाः ।**
**त आत्मानं निबृहन्तीह[२] कामात्**
**मुञ्जादिषीकामिव धीरभावात् ।। ६ ।।**

**वादिराजीयम्–** किञ्च ते अस्मिन् लोके **कामान्** विषयान् **विजयन्ति** प्राप्नुवन्ति । **ब्राह्मीं स्थितिं** परब्रह्मविषयां स्थितिं । ब्रह्मचर्यमिति यावत् । **अनुतितिक्षमाणाः** प्रतिदिनं सहमानाः **ते आत्मानं** जीवं परमात्मानं वा ।

१. विजयन्तीहेति पाठान्तरम् । २. निर्वहन्तीहेति पाठान्तरम् ।

देहेन्द्रियादिसङ्घातं **निर्वहन्ति** निकृष्य जानन्ति । कस्मात्? **कामात्** स्वेच्छया **धीरभावात्** धैर्याच्च । तत्र दृष्टान्तमाह— **मुञ्जादिति । मुञ्जात्** तृणविशेषात् यथा इषीकाम् अन्तस्थां निर्वहन्ति तथेत्यर्थः ।। ६ ।।

**सत्यधर्मीयम्–** किंच अस्मिन् लोके ये कामान् जयन्ति ते इहैव **ब्राह्मीं** ब्रह्मसम्बन्धिनीं सायुज्याद्यात्मिकां स्थितिं अनु मुक्तिम् ।

अनुहीने सहार्थेच पश्चात्सादृश्ययोरनु ।
आयामेच समीपे च लक्षणादावनुक्रमे ।
आश्रये बन्धने मोक्षे दानकर्मणि दर्शने ।। इति विश्वः ।

तितिक्षमाणाः प्राक् कामादीन् । अन्वनन्तरं कामान् जयन्तीति वाऽन्वयः । अत एव ते आत्मानं **कामात्** तदादितः **निबृहन्ति** उत्कृषन्ति । तत्र तन्त्रं धीरभावाद्धैर्यात्स्थगनादिति । कस्मात्कामिवे- त्यत आह– मुञ्जात् इषीकां मुञ्जगर्भनिभृतां निबृहन्ति तथेति । श्रूयते कठवल्लीषु ''अङ्गुष्टमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्ठः । प्रवृहेन्मुञ्जादिवेषीकां धैर्येण विद्याच्छुक्रममृतम्'' इति ।। ६ ।।

**शरीरमेतौ कुरुतः पिता माता च भारत ।**
**आचार्यतश्च यज्जन्म तत्सत्यं वै यथाऽमृतम् ।। ७ ।।**

**वादिराजीयम्–** आचार्ययोनिमिति आचार्यस्य जनकत्वमभिहितं तन्मातापितृसाधारणं नेत्याह– **शरीरमिति । आचार्यतः** आचार्यात् **यज्जन्म** ज्ञानरूपं **तत्सत्यं** अविनाशि । विनाशाभावसम्पादकमिति यावत् ।। तत्र दृष्टान्तमाह— **यथेति** ।। ७ ।।

**सत्यधर्मीयम्–** आचार्ययोनिमिति न सम्भवति । मातुः पितुश्च योनेः सर्वजनीनत्वादित्यतः स एव मुख्ययोनिरित्याह – **शरीरमिति** ।

**एतौ** एषा चैषचेत्येतौ मातापितरौ । शरीरमेव कुरुतः । उभयोः शुक्ल-शोणितसम्बन्धाद्यज्जन्म तत् मृतिमच्छरीरमात्रानुबन्धि । आचार्यतश्च यज्जन्म तत् **यत्** सम्यक् । **अमृतं** शाश्वतम् । सत् ब्रह्म यापयतीति **सत्यम्** । भसंज्ञातो नय इत्वम् । वैकारः "तान्होवाच । एतावदेवाहमे तत्परमं ब्रह्म वेद नातः परमस्तीति ते हि तमर्चयंतस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति नमः परमऋषिभ्यो नमः परमऋषिभ्यः" इति षट्प्रश्नोपनिषदादि प्रसिद्धिद्योतकः ।

टीकाच "भगवन् पिप्पलाद त्वं हि नः पिता निरुपाधिकोपकारकः कथं यस्त्वमस्माकम् । अस्मानविद्यायाः परं पारं तारयसि । अतारयः । कोहि नामैवमुपकुर्यादितीति सोपाधिकपित्रादितो निरूपाधिकः पिता गुरुरिति ततोधिक इति स्पष्टमाचष्टे । तथाचाहापस्तम्बोऽपि । सहि विद्यातस्तं जनयति तच्छ्रेष्टं जन्म शरीरमेवाजनयत इति । इदमेकं जन्म चेद्विजः कथमिति चेत् । न स्थूलदृश्वविवक्षया तद्वित्वं तत्प्रयुक्तं द्विजत्वं च । वस्तुतस्तु उदाहृतमानसिद्धमिति तृतीयमपि मुख्यं स्वीकर्तव्यम् । **आमृतं** आसम्यक् तत्वं चापरिहार्यताप्रयुक्तम् । मृतं मृतिर्यस्य तच्छरीरं कुरुत इत्यन्वय इति वा । आचार्यतो यज्जन्म तत् यथा सत्यं सम्यक् नित्यं अविनाशीत्यन्वयो वा ॥ ७ ॥

**य [१]आवृणोत्यमृतं सं प्रयच्छन्**
**तस्मै न द्रुह्येत्कृतमस्य जानन् ।**
**गुरुं शिष्यो नित्यमभिवादयीत**
**स्वाध्यायमिच्छेच्च सदाऽप्रमत्तः ॥ ८ ॥**

---

१. आस्तृणोति इति पाठान्तरम् ।

**वादिराजीयम्– य आस्तृणोतीति । अमृतं** न विद्यते मृतं मरणं यस्मात्तदमृतं परब्रह्मविषयकं ज्ञानं सम्प्रयच्छन् सन् यः **आस्तृणोति** विस्तारयति । यद्वा **अमृतं** नित्यं वेदं सम्प्रयच्छन् शिष्येभ्यो उपदिशन् सन् यः ज्ञानेन आस्तृणोति ज्ञानं विस्तारयति तस्मै गुरुवे न द्रुह्येत् । अस्य कृतम् । तृतीयार्थे षष्ठी । अनेन कृतम् । आत्मनः उपकारं जानन् ।। ८ ।।

**सत्यधर्मीयम्–** शिष्यो विशिष्यैवं गुरौ वर्तेतेति वक्ति– **य इति ।** यो गुरुः । अमृतं संप्रयच्छन् । **आवृणोति** शिष्यतया स्वीकरोति । **तस्मै** गुरवे । न द्रुह्येत् । क्रुधद्रुहेति चतुर्थी । अस्य अनेन **कृतं** उपदेशादिनोपकारम् । **जानन्** स्मरन्निति यावत् । विना द्रोहं न हि तूष्णीको भवेद्भवेदेवं कर्तेत्याह– **गुरुं शिष्यो नित्यं अभिवादयीत नमस्कुर्यात् इति ।** अहं तावद्विद्वानिति नाहंता कर्तव्या किं तु पुनः पुनः स्वाध्यायमधीयीतेत्याह– **स्वाध्यायमिति ।** अप्रमत्तः सन् । **स्वाध्यायं इच्छेत्** तच्छ्रवणादिपरो भूयादिति भावः । तथाच श्रुतिः तथागुराविति । तद्योग्यतानतिरेकेण गुरौ भक्तिः कर्तव्येति तदर्थः । आपस्तम्बश्च तस्मै न द्रुह्येत्कदाचन सहि विद्यातस्तं जनयतीति । गुरुमित्युपलक्षणम् । स्वोत्तमत्वेन तदनुबन्धिजनं च । यद्वक्ष्यति । गुरुपत्न्यामित्यादि । **सदेति ।** स्वाध्यायं सदेच्छेत् सदाऽप्रमत्तः सन्नित्यन्वेति ।। ८ ।।

**शिष्यो वृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ।**
**ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ।। ९ ।।**

**वादिराजीयम्–** इदानीं ब्रह्मचर्यस्य चतुष्पादत्वमभिप्रेत्य प्रथमं पादमाह– **शिष्य इति । यः शुचिः** शुद्धः सन् **शिष्यः वृत्तिक्रमेण** आचार्याणा-

मनुवृत्तिक्रमेण विद्यामाप्नोतीति यत् सः ब्रह्मचर्यव्रतस्य प्रथमः पाद उच्यते ॥ ९ ॥

**सत्यधर्मीयम्–** इदानीं तद्ब्रह्मचर्यं साङ्गं चेत्फलायालमिति श्लोक-चतुष्टयेन तत्पादचतुष्टयमाचष्टे– **शिष्य इति । वृत्तिक्रमेण** कुशपाणि-तयोपसरणपरिचरणादिना श्रुतेन क्रमेण । आचार्ययोनिमित्याद्युक्त-क्रमेणेति वा । यः शुचिः वाचा कर्मणा तेनैव मनसाच । शिष्यः विद्यामाप्नोतीति तल्लाभः । अस्य ब्रह्मचर्यस्य **प्रथमः** आद्यः पादः उच्यते ॥ ९ ॥

**यथा नित्यं गुरौ वृत्तिर्गुरुपत्न्यां तथाऽऽचरेत् ।**
**तत्पुत्रेच तथाकुर्वन् द्वितीयः पाद उच्यते ॥ १० ॥**

**वादिराजीयम्–** द्वितीयं पादमाह— **यथेति । तत्पुत्रे** गुरुपुत्रे **तथा** गुरुवत् वृत्तिं कुर्वन् शिष्यः गुरुपत्न्यां तथा गुरुवद्वृत्तिमाचरेत् इति यत् अयं द्वितीयः पाद उच्यते ॥ १० ॥

**सत्यधर्मीयम्–** गुरौ यथा तद्योग्यतानुसारेणाङ्गमर्दनादिनेति यावत् । गुरुपत्न्यां आचरेत् । वृत्तिरित्यावृत्तं द्वितीयान्तं सदन्वेति । तत्पुत्रे गुरुपुत्रे च तथाकुर्वन्निति विशेषणीभूतं करणं द्वितीयः पाद उच्यते । उक्तं च अचार्यवदाचार्यदारेषु वृत्तिराचार्यपुत्रे वृत्तिश्चेति । अन्यत्रापि गुरुवद्गुरुपुत्रे वर्तितव्यं विनापादसंहननोच्छिष्टाभ्यामित्युक्तेर्यथाश्रुतं वर्तितव्यमिति तथा-पदार्थो ज्ञेयः ॥ १० ॥

**आचार्येण कृतं ज्ञात्वा भावितोऽस्मीति मन्यते ।**
**तं गुरुं प्रतिहृष्टः सन् तृतीयः पाद उच्यते ॥ ११ ॥**

**वादिराजीयम्–** तृतीयपादमाह— **आचार्येणेति** । भावितोऽस्मीति । अनेन ज्ञानदानेनोत्पादितोऽस्मीति ।। ११ ।।

**सत्यधर्मीयम्–** आचार्येण कृतं स्वसन्मार्गप्रदर्शनोपकारम् । ज्ञात्वा प्रहृष्ट उद्धृतोस्मीति भावितः । तृतीयं जन्म प्रापित इति तं गुरुं पितरं प्रतिमन्यते । गुरुर्निषेवकादिकरे पित्रादावित्यादेः गुरुः पिता गुरुर्माता गुरुर्बन्धुरित्यादेः । **सन्** उत्तमः विद्यमान इति । एवं वर्तनं तृतीयः पाद उच्यते ।। ११ ।।

**आचार्येणात्मकृतं विजानन्**
**ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन ।**
**यन्मन्यते तं प्रति हृष्टबुद्धिः**
**सवै तृतीयो ब्रह्मचर्यस्य पादः[1] ।। १२ ।।**

**सत्यधर्मीयम्–** प्रायेणानेवंभूता लोका इत्यभिप्रायेण तृतीयं पाद-मुक्तमपि पुरनरावश्यकतया वदति– **आचार्येणेति । आत्मकृतं** आत्मनः स्वस्य कृतं आत्मानं भगवन्तमुद्दिश्य कृतम् । प्रवचनादिक्रियां तत्सम्बन्धिकृतं वा जानन् । किञ्च अनेन भावितोऽस्मीति च ज्ञात्वा । तमाचार्यं हृष्टबुद्धिस्सन् । मन्यते आचार्यतया मन्यत इति यत्सवा इत्यन्वयः । पूर्वोक्तेन सह किञ्चिदधिकं तृतीयत्वेन वक्ति– **यन्मन्येत इति** । आचार्यो यादृशी सेवाऽनेन कारयितव्येति यन्मन्यते तत्प्रति तदाभिमुख्येन हृष्टबुद्धिः सन्नेव वर्तेत न क्लिष्टो दशाकष्ठां दर्शयेदिति व्यातन्वते । केचित्तु श्लोकोऽयं प्रक्षिप्त इति वदन्ति ।। १२ ।।

---

१. वादिराजीये पाठे नायं श्लोको व्याख्यातः । अत इतः परं श्लोकसङ्ख्यासु व्यत्यस्तिरस्ति ।

**आचार्याय प्रियं कुर्यात्प्राणैरपि धनैरपि ।**
**कर्मणा मनसा वाचा चतुर्थः पाद उच्यते ।। १३ ।।**

**वादिराजीयम्–** अथ चतुर्थपादमाह— **आचार्यायेति** । स्पष्टार्थोऽयम् ।। १२ ।।

**सत्यधर्मीयम्–** धनैः बहिश्चरैः प्राणैः पुनः प्राणैरन्तश्चरैरपि । दधीच्यादिवत् । कर्मणा तथा वाचा मनसाच । आचार्याय प्रियं कुर्यात् । सर्वात्मना तत्प्रियकरणं चतुर्थः पाद इत्येवं साङ्गं ब्रह्मचर्यं ज्ञेयम् ।।१३।।

**कालेन पादं लभते यथार्थं**
**ततः पादं गुरुयोगतश्च ।**
**उत्साहयोगेन च पादमृच्छेत्**
**शास्त्रेण पादं च ततोऽभियाति ।। १४ ।।**

**वादिराजीयम्–** विद्याया अपि चतुष्पादत्वं वदन् एकैकं प्राप्त्युपायमाह— **कालेनेति** । अत्र क्रमो न विवक्षितः । तथा च **गुरुसंयोगतः** गुरुप्रसादलक्षणोपायात् प्रथमं पादं लभते । **ततः उत्साहयोगेन** उत्साहः प्रयत्नं, तेन तत्साध्यो बुद्धिविशेषो लक्ष्यते । तथा च बुद्धिविशेषेण द्वितीयं पादमादत्ते । **ततः कालेन** सब्रह्मचारिसमागमनकालेन तृतीयम् । **शास्त्रेण** शास्त्रं शासनं, शिष्यान् प्रति व्याख्यानमिति यावत् । यद्वा **शास्त्रेण** शिष्यान्प्रत्युपदिश्यमानेन चतुर्थपादमभियाति । कीदृशं ? **तथार्थं** तथाभूत ''एवं वसन्'' इत्यादिना वक्ष्यमाणोऽर्थो यस्मात्तत्तथार्थम् । तदुक्तं— ''आचार्यात्पादमादत्ते पादं शिष्यः स्वबुद्धितः । पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात्'' इति ।। १३ ।।

**सत्यधर्मीयम्–** इदानीं–

आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया ।
कालेन पादमादत्ते पादं सब्रह्मचारिणा ।।

इत्याद्युक्तं विद्यापादचतुष्टयं प्रसङ्गायातं दर्शयति । गुरुयोगतः । आचार्ययोनिमित्याद्युक्तयोगादिति प्रथमपादप्रथनम् । स्वोत्साहयोगेन स्वमेधयेति द्वितीयं पादं ऋच्छेत् । **कालेन** विद्याफलनोन्मुखेन। **अर्थं** अभ्यर्थनीयमिति सर्वत्रान्वेति । गुरुयोगतः पादमित्यत्राख्यातयेत्यस्याध्याहारः कर्तव्यः । ब्रह्मणश्चारो विचारोऽस्यास्तीति तच्छास्त्रं तदुपयोगीति शास्त्रेण ब्रह्मचारिणेत्यनयोरैककण्ठ्यं तेन पादमभियाति । मूलकृत्तु चतुष्टयस्यावश्यकताद्योतनाय क्रममतिक्रान्तवानिति मन्तव्यम् ।। १४ ।।

**ज्ञानादयो द्वादश यस्य रूप-**
**मन्यानि चाङ्गानि तथा बलं च ।**
**आचार्ययोगे फलतीति चा-**
**हुर्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ।। १५ ।।**

**वादिराजीयम्–** पूर्वोक्तज्ञानादीनामाचार्ययोगेऽतिशयफलदत्वमाह— **ज्ञानादय इति । यस्य** अधिकारिणो ज्ञानादयो रूपम् । **आचार्ययोगे** आचार्यसन्निधाने फलतीति प्राज्ञाः धर्माः भवन्तीति । यस्य ते ज्ञानादयो द्वादश । तथा **अन्यानि** ''षड्विधस्त्यागः'' ''सत्यं न्यून''मिति श्लोकोक्तानि च । तथा **बलं** मीमांसोक्तयुक्तिबलं च इत्येतत्सर्वं प्राहुः । **ब्रह्मचर्यं ब्रह्मार्थयोगेन** परब्रह्मरूपार्थस्य भक्तिलक्षणोपायेन फलति ।।१४।।

**सत्यधर्मीयम्–** ''आचार्यवान्पुरुषो वेद'' ''आचार्याद्ध्येव विद्या

विदिता साधिष्ठं प्रापयति'' इत्यादिश्रुतेराचार्यसन्निधितः फलमित्यालपति– **ज्ञानेति** । ज्ञानं चेत्यादिनादावुक्ताः द्वादश गुणाः **यस्य** अधिकारिणः **रूपं** स्वाभाविका इति यावत् । **अन्यान्यङ्गानि** ''श्रेयांस्तु षड्विधस्त्यागः'' सत्यं ध्यानम्'' इति श्लोकाभ्यामुक्तानि **बलं** बाल्यं युक्तिसहायतेत्यत्रोक्तः शक्तिविशेषः । आचार्ययोगे आचार्यसम्बन्धे तल्लक्षणोपाये वा एतत्सर्वं फलतीत्याहुः । आह चाहुरिति बहुवचनेन बहुसंमतिम् । **ब्रह्मार्थयोगेन** ब्रह्मणो वेदस्यार्थेन मुख्यार्थभूतेन हरिणा योगः प्रतिपादकत्वप्रतिपाद्यत्वज्ञानं तेन च ब्रह्मचर्यं फलतीति चाहुः । यद्यपि फलन्तीति वक्तव्यं तथाऽप्येतस्य सर्वस्यैकविषयतेति सूचनं फलतीत्येकवचनफलमिति मन्तव्यम् ।। १५ ।।

**एवं वसन्तं[1] यदुपप्लवेद्धनं**
**आचार्यायैव तदनु प्रयच्छेत्[2]।**
**सतां वृत्तिं बहुगुणामेवमेति**
**गुरोः पुत्रे भवति च वृत्तिरेषा ।। १६ ।।**

**वादिराजीयम्–** वसन्नित्यत्र एवं गुरुकुले वसन्, यद्धनं **उपप्लवेत्** प्राप्नोति तत् **आचार्यया** आ सम्यक् चर्यया प्राप्तमित्येव मन्येत् । परन्तु यद्धनसश्चयादिकम् अहं करोमीति न मन्येत्, न मन्येतेत्यर्थः । ''आचार्याय वै तदनुयच्छेत्'' इति पाठः स्पष्टार्थः । शिष्टं स्पष्टम् ।। १५ ।।

**सत्यधर्मीयम्–** एवं वसन्तं गुरुकुले यद्धनं यदृच्छया **उपप्लवेत्** आगच्छेत् तद्धनं आचार्याय प्रयच्छेत् । विना मनस्तापमिति प्रः प्राह । अन्वनन्तरमेव सौमनस्येन दद्यात् । एवं वितरणे फलं लपति । बहुगुणां

१. वसन् तद्यदिति पाठान्तरम् । २. आचर्यया प्राप्तमित्येव मन्येदिति पाठान्तरम् ।

सतां वृत्तिं एतमाप्रोतीति । गुरुः कदाचिदन्यत्र गतो मृतो वा चेदेषा वृत्तिर्गुरुपुत्रे च भवति कर्तव्येति । केचित्तु संपादितवित्तवितरणं न शिष्यमात्रधर्मः किं तु गुरोः पुत्रेऽपि । एषा शिष्यं प्रत्युदीरिता वृत्तिः कर्तव्या भवतीति व्यातन्वते ।। १६ ।।

**एवं वसन्सर्वतो वर्द्धते ह[1]**
**बृहत्पुत्रान्[2] लभते च प्रतिष्ठाम् ।**
**वर्षन्ति चास्मै प्रदिशो दिशश्च**
**वसन्त्यस्मिन् ब्रह्मचर्ये जनाश्च ।। १७ ।।**

**वादिराजीयम्–** एवमायासेनानुतिष्ठता गुरुसेवायाः फलमाह– **एवं वसन्निति** ।। १६ ।।

**सत्यधर्मीयम्–** एवं वसन्गुरौ सर्वतः । वर्धते । बृहतः पुत्रान् लभते । **प्रतिष्ठां** सत्कारं संस्थितिं वा । दिशः प्रदिशश्च तद्देवाः वर्षन्ति तदभिमतम् । अस्मिन्नेव ब्रह्मचर्ये जनाश्च वसन्ति । तत्सहाया भवन्तीति यावत् ।। १७ ।।

**एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।**
**ऋषयश्च महाभागा ब्रह्मचर्येण चाभवन् ।। १८ ।।**

**वादिराजीयम्–** न केवलमेतावत्किन्तु देवत्वादिकमपीत्याह— **एतेनेति** । ऋषयश्च ब्रह्मचर्येण महाभागा अभवन्निति योजना ।। १७ ।।

**सत्यधर्मीयम्–** तद्ब्रह्मचर्यं द्वाभ्यां स्तौति– **एतेनेति** । ऋषयोऽभवन् । ऋषित्वमगमन्निति यावत् ।। १८ ।।

---

१. वर्धतीहेति पाठान्तरम् । २. बहून् पुत्रानिति पाठान्तरम् ।

**एतेनैव सगन्धर्वा रूपमरप्सरसोऽजयन् ।**
**एतेन ब्रह्मचर्येण सूर्य अह्राय जायते ।। १९ ।।**

**वादिराजीयम्– अजयन्** "जि प्राप्तौ" इति धातोः प्राप्नुवन्नित्यर्थः । यद्वा रूपमन्येषां सौन्दर्यमजयन् अभ्यभावयन्नित्यर्थः । **अह्राय** जगतां द्योतनाय । "अह्रो दीप्तिश्च कथ्यते" इत्युक्तेः ।। १८ ।।

**सत्यधर्मीयम्–** सगन्धर्वाः अप्सरस इत्यन्वयः । सूर्यः **अह्राय** जगद्योतनाय । अह्रो दीप्तिश्च कथ्यत इति वचनात् । **जायते** आविर्भवति ।। १९ ।।

**अत्याशयेत्पाटयेच्चापि[1] राजन्**
**सर्वं शरीरं तत्तपसा तप्यमानः ।**
**एतेनासौ बाल्यमत्येति विद्वान्**
**मृत्युं तथा रोधयत्यन्तकाले ।। २० ।।**

**वादिराजीयम्–** किञ्च **तपसा** ब्रह्मचर्याख्येन तप्यमानः पुमान् सर्वं शरीरं जीवजातं "यस्यात्मा शरीरं" इति श्रुतेः । **अत्याशयेत्** अतिशयेन भोजयेत् पाययेच्च । **बाल्यं** मौर्ख्यम् ।। १९ ।।

**सत्यधर्मीयम्–** तपसा सर्वशरीरमत्याशयेत् । अचञ्चलमुपवेशयत् । **पाटयेत्** शिरआद्युत्कर्तनादिकं कुर्यात् । एवं तप्यमानोऽसौ **एतेन** ब्रह्मचर्येण । प्राप्ता या बाल्यमतिस्तयाचेति पूर्वोक्तरीत्या विद्वान् **मृत्युं** अपमृत्युं अन्तकाले तथा **रोधयति** निरोधयति यथास्वं न नयेत्तथेति ।। २० ।।

---

१. पाययेच्चापीति पाठान्तरम् ।

**आकाङ्क्षार्थस्य संयोगाद्रसभेदार्थिनामिव ।**
**एवं ह्येतत्समाज्ञाय तादृग्भावं गता इमे ।। २१ ।।**

**वादिराजीयम्–** एकस्य ब्रह्मचर्यस्यानेकफलत्वं दृष्टान्तप्रदर्शनेनोपपादयति— **आकाङ्क्षार्थस्येति । रसभेदाः** रसाः श्रेष्ठाः तद्भेदाः तद्विशेषाः पारिजातादयः **आकाङ्क्षार्थस्य संयोगात्** आकाङ्क्षारूपो योऽर्थः तस्य संयोगात् सम्बन्धात् तमर्थं प्रयच्छन्ति । **एवमेतत्** ब्रह्मचर्यमपीति । **समाज्ञाय** सम्यज्ज्ञात्वा **इमे** देवादयः तादृग्भावं देवत्वादिकं **गताः** प्राप्ताः ।। २० ।।

**सत्यधर्मीयम्–** नन्वेकं ब्रह्मचर्यं कथं विचित्रानेकफलोपलम्भकं भवतीत्यतः सदृष्टान्तं तदभिनिवेशतस्तत्तत्फलं यच्छतीत्याह– **आकाङ्क्षेति ।** आकाङ्क्षाया अर्थस्य संयोगात् इव । यथा कल्पवृक्षादयः । **रसभेदार्थिनां** भिन्नभिन्नफलार्थिनाम् । तत्तदिच्छानुसारं फलं यच्छन्ति । **एवं** तथा एतद्ब्रह्मचर्यमिति **समाज्ञाय** ज्ञात्वा **इमे** देवादयः । **तादृग्भावं** तादृशत्वं **गताः** प्राप्ताः इति यत्तस्मादाचार्ययोनिं प्रविश्येत्याद्युक्तं ब्रह्मचर्यं चरेत् । स्वयमचित्रं सद्विचित्रानेकफलं तदिति तात्पर्यम् ।। २१ ।।

**अन्तवन्तः[१] क्षत्रिय ते [२]जयन्ति**
**लोकान् जनाः कर्मणा निर्मलेन ।**
**ज्ञानेन विद्वांस्तेज अभ्येति नित्यं**
**न विद्यते ह्यन्यथा तस्य पन्थाः[३] ।। २२ ।।**

---

१. अन्तवत इति पाठान्तरम् । २. तेजयन्ति इति पाठान्तरम् । पाठोऽयं चर्तधर्मादृतः । अत्र व्याख्याने पङ्क्तिरेकाऽस्पष्टा द्वितीयात्वेवं विद्यते– क्षत्रियपदानुकूल्यात् । तेजयन्ति उत्तेजयन्ति । स्वतः प्रकाशमानानपि लोकान् स्वप्रकाशप्रकाशितान् कुर्वन्तीति यावत् इति । ३. नान्यः पन्था अयनाय विद्यते इति पाठान्तरम् ।

**वादिराजीयम्–** न केवलं ब्रह्मचर्यस्योक्तफलप्रदत्वम् । किन्तु ज्ञानद्वारा मोक्षहेतुत्वमित्यभिप्रेत्यापरोक्षज्ञानस्यैव मोक्षहेतुत्वं न कर्मण इत्याह— **अन्तवन्त इति ।** अन्तो निर्णयः, "उभयोरपि दृष्टोऽन्तः" इत्युक्तेः । हे क्षत्रिय! कर्मस्वरूपनिर्णयवन्तो जनाः निर्मलेन कर्मणा **लोकान्** स्वार्गादीन् **जयन्ति** प्राप्नुवन्ति । "अन्तवत" इति पाठे अन्तवतो लोकानित्यर्थः । विद्वान् **ज्ञानेन** अपरोक्षेण नित्यं **तेजः** तेजःस्वरूपं ब्रह्म **अभ्येति** प्राप्नोति । **तस्य** ब्रह्मप्राप्तिलक्षणस्य मोक्षस्य **अन्यथा पन्थाः** ज्ञानं विना अन्यो मार्गो **न विद्यते** नास्तीति ।। २१ ।।

**सत्यधर्मीयम्–** ननु न ज्ञानं विना मुक्तिरिति चेत्किलानालोचनं तदेव संपादनीयं स्यादपाम सोमममृता अभूमेति कर्मणोऽपि मुक्ति-प्रापकताऽस्तीति न तदावश्यकमित्यत आह– **अन्तवन्त इति ।** क्षत्रियभिन्नाः जनाः साधारणाः कर्मणा लोकान् **जयन्ति** प्राप्नुवन्ति । जिः प्राप्त्यर्थः, गतम् । परं तु त एतादृशा इति शंसति । **अन्तवत इति** । क्षयिष्णून् । तत्कर्म कीदृगित्यत आह । **अनिर्मलेन** निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनमित्याद्युक्तज्ञानद्वारामुक्तिदनिवृत्तकर्मे-तरत्वादनिर्मलम् । कामकलिलं तेन । "कर्मणा त्वधमः प्रोक्तः प्रसादः" इत्याद्युक्तेः । हरिप्रसादोऽपि तद्योग्य एवेति "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्याद्युक्तप्रत्यावृत्तिः सम्भाविनीति । अमृतपदं तु "प्रसादात्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः" इत्यादेरत्रत्यसुखापेक्षया किञ्चिच्चिरकालिक इति तत्पदम् । विद्वांस्तु ज्ञानेन निवृत्तकर्मलब्धेन नित्यं तेजः । ज्योतिर्हृदय आहितं यत्" इत्यादेर्ज्योतिः अभ्येति । तत्प्राप्तिरेव मुक्तिरित्येवमुक्तिः । प्रतीकधारणमुखेन नान्यः पन्था अयनाय विद्यत इति श्रुतिं प्रमाणयति– **न विद्यते ह्यन्यथा तस्य पन्था इति ।** क्वचित्पुस्तकसंपुट्यां नान्यः पन्था अयनाय विद्यत इति वेदपादो विद्यते स सरलः पाठः ।। २२ ।।

**धृतराष्ट्र उवाच–**

**आभाति शुक्लमिव लोहितमिवा–**
**थो कृष्णमथांजनं[१] काद्रवं वा ।**
**तद्ब्राह्मणः पश्यति यत्र विद्वान्[२]**
**कथं रूपं तदक्षरं परं ब्रह्म ।। २३ ।।**

**वादिराजीयम्–** एवं ब्रह्मचर्यस्वरूपं ज्ञात्वा, धृतराष्ट्रः तत्प्राप्यं ब्रह्म कीदृशमिति पृच्छति— **आभातीति । विद्वान् ब्राह्मणः यत्** ब्रह्म पश्यति तत् **ब्रह्म शुक्लमिवाभाति** शुक्लपटादिकमिव पटादिरूपसदृशरूपोपेतं आभाति किं ? । एवमुत्तरत्रापि योजना । किञ्च तद्ब्रह्म कथं रूपं ? कीदृश-धर्मोपेतं ? तत्सर्वं ब्रूहीति शेषः । "तद्ब्राह्मणः पश्यति यत्र विद्वान्" इति पाठे यत्रेत्यस्य कुत्रेत्यर्थः । "अस्तं यत्र च गच्छति" "धारणा यत्र सम्मता" इत्यत्रेव । तथाचायमधिकरणप्रश्नः ।। २२ ।।

**सत्यधर्मीयम्–** ज्ञानिज्ञानविषयोऽक्षरं भवतीति अशब्दमस्पर्शम-रूपमिति रूपरहितं तच्छ्रूयते श्रयते च क्वचिद्यदा पश्यः पश्यते रुग्म-वर्णमिति तच्छुभ्रम् । ज्योतिषां ज्योतिः क्वचिच्चेत्येवमव्यवस्थायां कथं रूपं तदिति निरूपयितुं शक्यम् । किं च महतोऽपि महतो नायतनमिति किमधिकरणं तद्भवेदिति भवेज्ज्ञानविषयोऽतो भवदुक्तं युक्तं कथं स्यादिति धृतराष्ट्रः शङ्कते– **आभातीति** । क्वचित् **लोहितं** रक्तरूपम् । **कृष्णं** श्यामम् । **अञ्जनं** नीलम् । "ताम्राणि शुभ्राणि च पिङ्गलानि श्यामानि नीलानि चतुर्भुजानि" इत्यभियुक्तोक्तेस्तद्विशेषोऽवसेयः । यद्वाऽञ्जनं नानाविधमिति तेनात्रानुक्तरूपं स्वीक्रियत इति नातिरेकः ।

१. अथार्जुनं इति पाठान्तरम् । २. यद्ब्राह्मणः पश्यति तद्धि विद्वान् इति पाठान्तरम् ।

**काद्रवं** "पिङ्गपिशंगौ कद्रुपिङ्गलौ" इत्यमरः । कद्रोरिदं पैङ्गलमित्यर्थः । स्वार्थे वाऽण् । विद्वान्ब्रह्मणो रूपं तदभावश्रवणादिना व्यवस्थितैः पश्यति । यत्रेत्यधिकरणप्रश्नः । तदक्षरं परं ब्रह्म कथं रूपं कथं किं प्रकारं रूपं यस्य तत्तथेति रूपप्रश्न इति विवेकः ।। २३ ।।

**सनत्सुजात उवाच–**

**नाभाति शुक्लमिव लोहितमिवा–**
**थो कृष्णमथांजनं काद्रवं वा ।**
**न पृथिव्यां तिष्ठति नान्तरिक्षे**
**नैतत्समुद्रे सलिलं बिभर्ति ।। २४ ।।**

**वादिराजीयम्–** तस्याप्राकृतरूपवत्त्वेन न मानुषादिरूपवत्त्वं इत्यभिप्रेत्योत्तरमाह— **नाभाति** । 'तदक्षरं कथं रूपं' इति प्रश्नस्योत्तरमाह— **न पृथिव्यामित्यादिना** । स्वतन्त्रत्वेनान्याधारानपेक्षत्वान्न पृथिव्यादिषु तिष्ठति । यत्समुद्रे विद्यमानं सलिलं एनं बिभर्ति ।। २३ ।।

**सत्यधर्मीयम्–** उत्तरं वक्ति भगवांत्सनत्सुजातो द्वाभ्यां श्लोकाभ्याम्– **नाभातीति** । इवावधारण इत्यमरात् शुक्लमेव नाभाति । एवमुत्तरत्रापि । सर्वं रूपं सम्भावितं भवति भगवतीति तत्वेनैव वक्तुमशक्यम् । "ततो यदुत्तरतरं तदरूपमनामयम् । अशब्दमस्पर्शमरूपमव्ययम् इत्यादेः का गतिरिति चेत् । यथाश्रुतस्वीकारे बहुविप्लवापत्तेः । व्याख्याताश्चाचार्यैरेतदेतत्सजातीयाश्च श्रुतयो मानान्युदाहृत्यान्यत्र "अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनात्" इत्यादिना । यत्रेत्युत्तरयन्ति– **न पृथिव्यामिति** । अत्रापि तत्रैवेतीति पूरणीयम् । यस्माद्ब्रह्म **सलिलं** तदुपलक्षितपञ्चभूतात्मकं कायं न बिभर्ति । उक्तं चेशावास्योपनिषद्भाष्यादिषु । शुक्रमकायमव्रणम् ।

शुक्रं तच्छोकराहित्यादकायं लिङ्गवर्जनात् ।
स्थूलदेहस्य राहित्यादस्नाविरमुदाहृतम् ।। इत्यादिना ।

अत एव समुद्रेच नाभाति ।। २४ ।।

**न तारकासु नच विद्युदाश्रितं**
**नचाभ्रेषु दृश्यते रूपमस्य ।**
**नचापि वायौ न च देवतासु**
**नैतच्चन्द्रे दृश्यते नोत सूर्ये ।। २५ ।।**

**वादिराजीयम्–** न तारकास्विति स्पष्टोऽर्थः ।। २४ ।।

**सत्यधर्मीयम्–** तारकासु । तारकाज्योतिषीति निपातनान्न प्रत्ययस्थादितीत्वम् । तत् न च विद्युदाश्रितम् । तटिति न तिष्ठतीति तात्पर्यं अस्याक्षरस्य । रूपं **अभ्रेषु** मेघेषु न दृश्यते । एवमुत्तरार्धेऽपि ज्ञेयम्
।। २५ ।।

**नैवर्क्षु नैतद्यजुःषु नाप्यथर्वसु**
**नचापि दृश्यममलेषु सामसु ।**[1]
**रथन्तरे बृहद्रथे वाऽपि राजन्**
**महाव्रतस्यात्मनि दृश्यतेऽपि तत् ।। २६ ।।**

**वादिराजीयम्–** एवं तस्य पृथिव्याद्यनाश्रितत्वमभिधाय ऋगादिप्रमाणावेद्यत्वमप्याह— **नैवर्क्ष्विति । ऋक्षु** ऋग्वेदेषु नैव दृश्यमित्यादि योजना । ''रथन्तरं बृहद्रथे'' इति सामप्रभेदौ । नन्वेवं तस्यावेद्यत्वा-

१. नैवर्क्षु तद्दृश्यते तद्यजुःषु न चाप्यथर्वस्वमलेषु सामसु इति पादद्वये पाठान्तरम् ।

च्छून्यत्वमेवेत्यत आह— **महाव्रतस्येति । महाव्रतस्य** पूर्वोक्त-ज्ञानादिमहाव्रतस्य **आत्मनि** मनसि तद्ब्रह्म दृश्यते । अनेन पूर्वोक्तगुणहीनेन ऋगाद्यवेद्यत्वेऽपि गुणवत्तायोग्यतानुसारेण ऋगादिवेद्यत्वान्न शून्यत्वमित्युक्तं भवति ।। २५ ।।

**सत्यधर्मीयम्–** वेदाद्येवैनं वेदयतीत्यादेस्तत्र मार्गणे मार्गः कश्चन प्रतीयेतेत्यत आह । नैवर्क्षु बहिर्मुखानां विमलेष्विति योग्यान्वयि । सामसु तत्रापि रथन्तरे बृहद्रथे भगवदवगमकतया प्रमितेऽपि भागे । तर्हि शून्यप्रायं किल त्वयोक्तं मुने इत्यत आह– **महाव्रतस्येति।** पूर्वोक्त-द्वादशव्रतवतः । **आत्मनि** हृदय एव **तत्** मदुक्तमक्षरं दृश्यते । उक्तं च काठकोपनिषदादिषु–

सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।
न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ।

आत्मन्येवात्मानं पश्येत् । परात्परं पुरिशयं पुरुषमीक्षत इति । सर्वे वेदा यत्पदमामनन्ति । वेदा ह्येवैनं वेदयन्ति । औपनिषदः पुरुषः, इत्यादिकमुक्तद्वादशव्रतवद्विनियुक्तास्तदवगमका इति न विरुद्धम् ।।२६।।

**अवारणीयं तमसः परस्ता-**
**त्तदन्ततोऽभ्येति[1] विनाशकाले ।**
**अणीयरूपं च तथाप्यणीयसां**
**महत्स्वरूपं त्वपि पर्वतेभ्यः ।। २७ ।।**

---

१. तदन्तकोऽन्वेति इति पाठान्तरम् ।

**वादिराजीयम्– तमसः** प्रकृतेः अज्ञानाच्च **परस्तात्** तदुभयास्पृष्टं **अन्तकः** अन्ते पृथिव्यादितत्वानामवसाने विद्यमानः **कः** महत्तत्वाभिमानी ब्रह्मा विनाशकाले **तत्** ब्रह्म **अन्वेति** प्रविशति । "तदन्ततोऽभ्येति" इति पाठे जगदिति शेषः । **अणीयसामप्यणीयरूपं** सूक्ष्मतरमित्यर्थः। तथा पर्वतेभ्योऽपि महत्स्वरूपम् ।। २६ ।।

**सत्यधर्मीयम्–** इदानीं ब्रह्मरूपं तद्दर्शनं तत्फलं च द्वाभ्यां लपति– **अवारणीयमिति** । महाव्रतस्यात्मनि दृश्यते तत् । अवारणीयं परिच्छेदराहित्यादत्रास्ति नास्ति तत्रेति वारयितुमशक्यम् । तमसोऽज्ञानात्परस्ताद्यत् । अज्ञानहीनमिति यावत् । **विनाशकाले** प्रलयकाले अन्ततः तदेव । आवरणीयमित्यध्याहृतजगत्पदेनाप्यन्वेति । इतराकार्यं जगत् **अभ्येति** प्रविशति । यमप्येति भुवनं सांपराये इति हि श्रुतिः यत्प्रयन्तीति च । प्रलय इति टीकायां व्याख्याता चेयं श्रुतिः । अणोरणीयान् महतो महीयान् इति श्रुतौ अणीयान्महीयानिति नेयसुनः कृत्यमणोरणुर्महतो महानित्येतन्मात्रोक्तावभिमतसिद्धेरित्यतः स्वयमेकदेशं व्याकृत्य तत्सार्थक्यं दर्शयति– **अणीयसामणीयरूपं चेति** । तथा च श्रुतावणुपदमणीयःपरं तथैकवचनं च बहुवचनार्थमिति दर्शितं भवति । अणीयसामिति निर्धारणे षष्टी अणीयेति छान्दसम् । **अणीयोरूपं** अणुतरेष्वणीयः मन्दविवक्षया । पर्वतेभ्यस्तदादिभ्योऽव्याकृताकाशांतेभ्यो महत्तरेभ्यः वस्तुभ्यः महत्स्वरूपं महीय इत्यर्थः । **अपि** गर्हिताः पर्वता येभ्योऽव्याकृताकाशादिभ्य इति । अपिः पदार्थसम्भावनान्ववसर्गगर्हा समुच्चयेष्विति स्मरणात् । परावनात्पर्वतनामधेयानित्यक्तस्तदभिमान्यादि-देवेभ्य इति वाऽर्थः ।। २७ ।।

**सा प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ।**
**भूतानि जज्ञिरे तस्मिन् प्रलयं यान्ति तत्र च ।। २८ ।।**

**वादिराजीयम्–** प्रतितिष्ठत्यस्मिन्निति **प्रतिष्ठा** । तद्ब्रह्म **अमृतं** नाशशून्यम् । तत् **लोकाः** सर्वलोकनियामकं, तत् **यशः** यशोरूपम् । **तस्मिन्** भगवति भूतानि जज्ञिरे । सृष्टिकाले इति शेषः । **तत्र च** तत्रैव प्रलयं यान्ति ।। २७ ।।

**सत्यधर्मीयम्–** यस्मिन् भूतानि जज्ञिरे । यस्मिंश्च प्रलयं यान्ति । **तत्र** तत् या प्रतिष्ठा मुख्यं स्थानं **सा** तत् । प्रतिष्टा प्रतिष्टार्थं सेत्युक्तिः । तदेवामृतं ते लोकाश्च तत् । तत्साम्यात् तदेव ब्रह्म तच्च यशः । तस्य नाम महद्यशः इति श्रुतिः ।। २८ ।।

**तदेतदह्ना संस्थितं भाति सर्वं**
**तदात्मवित्पश्यति ज्ञानयोगात् ।**
**तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं**
**य एतद्विदुरमृतास्ते भवन्ति ।। २९ ।।**

।। इति श्रीमन्महाभारते शतसाहस्र्यां संहितायाम् उद्योगपर्वाणि सनत्सुजातीये तृतीयोऽध्यायः समाप्तः ।।

**वादिराजीयम्– तदेतदिति** । **यदह्ना** दिवसेन निमित्तेन भाति तदेतत्सर्वं तस्मिन् **संस्थितं** प्रतिष्ठितम् । न केवलमह्ना प्रकाश्यमेतज्जगत्तस्मिन्स्थितं किन्तु इदं प्रमाणप्रमितं सर्वं जगत्तस्मिन्संस्थितम् । यद्वा भगवतः मूलाश्रयत्वं विशेषणद्वयेनोच्यत इति न पौनरुक्त्यम् । सदायतनाः सत्प्रतिष्टा इत्यत्रेव ज्ञातव्यम् ।। २८ ।।

।। इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातीये श्रीवादिराजतीर्थविरचिते विषमवाक्यप्रकाशे तृतीयोऽध्यायः ।।

**सत्यधर्मीयम्– तत्** व्याप्तं **एतत्** सर्वत्र सन्निहितं **अह्ना** स्वभासा 'अह्नो दीप्तिश्च कथ्यते' इति श्रुतिः । प्रस्तावान्तरे बृहद्भाष्ये– ''असावहरिति प्रोक्तः सर्वलोकप्रकाशनात्'' इत्युक्तेः संस्थितम् । अनु सर्वं इतरत् भाति । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतेः । **तत्** ब्रह्म आत्मवित् । ज्ञानात् पश्यति तद्विषयतां कलयतीति यावत् । तस्मिन्नेवैतत्सर्वं जगत्प्रतिष्ठितम् । यस्मिन्विश्वानि भुवनानि तस्थुरिति श्रुतेः । य एतद्विदुः ते अमृता मुक्ता भवन्ति । वेदपादोऽयम् ।। २९ ।।

**।। इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वाद्यनेकगुणसंपन्नश्रीम-द्रामचन्द्रदेवदिव्यपादपद्माराधकश्रीमत्सत्यवरतीर्थश्रीपादकरकमलसञ्जात-श्रीमत्सत्यधर्मयतिकृतायां व्याख्यायां श्रीमदुद्योगे सनत्सुजातीये तृतीयोऽध्यायः ।। ४ ।।**

# अथ चतुर्थोऽध्यायः

**सनत्सुजात उवाच–**

**शोकः क्रोधश्च लोभश्च कामो मोहः परासुता ।**
**ईर्ष्या मानोऽविवित्साच कृपाऽसूया[१] जुगुप्सुता ।। १ ।।**

**वादिराजीयम्–** पूर्वोक्तानां क्रोधादीनां न केवलं तपोविरोधित्वं किन्त्वैहिकानिष्टसम्पादकत्वमपीति दर्शयन् तपसः समृद्धत्वासमृद्धत्वे प्रतिपादयत्यनेनाध्यायेन । तत्र क्रोधादीनां ऐहिकानिष्टसम्पादकत्वमाह– **शोक इत्यादिना । परासुता** परे प्राज्ञनाम्नि असुः प्राणो यस्य सः परासुः तस्य भावः परासुता । निद्रेति यावत् । इयं च पूर्वं मोहशब्देनैव गृहीता । मोह-शब्दस्य मिथ्याज्ञानस्यैव कृत्याकृत्यराहित्यस्यापि वाचकत्वात् । स्पृहा च कामविशेषत्वेन कामपदेनात्र सङ्गृहीतेति ज्ञेयम् । अन्यत् प्रागेव व्याख्यातम् ।।

**सत्यधर्मीयम्–** इदानीं कामनया प्रवृत्तस्य तपआदेरुक्ताक्षरज्ञान-विरोधितामात्रं न किंत्वैहिकं देहनाशादिकमपि भवतीति दिदर्शयिषुर्य-त्प्रयुक्तं प्रवृत्तप्रवृत्तिस्तान् दोषान् भाषते– **शोक इति** । मुख्यं प्रयोजनं मध्ये कथंकथनमस्येत्यतो धृतराष्ट्रविरत्यादिकं भवेच्चेद्भवत्विति लोक-रीत्यनुसरणेन भगवत इति ज्ञेयम् । शोकक्रोधयोरुद्बन्धनादिना देहहानि-दृष्टेति । **लोभः** द्रव्यगार्ध्यम् । आशया देशभ्रमणे मध्येध्वा चोरादितो मरणसम्भवात् । **कामः** कीचकादिवत्प्राणनाशः । **मोहः** वैचित्यम् । **परासुता** अतिनिद्रा । तत्प्रायताभिप्रायतो निद्रायास्तत्वेनोक्तिः । ईर्ष्या-सूयेच प्राग्विवृते । स्पृहालोभशब्दावेकार्थवित्यन्यत्र स्पृहाग्रहोऽत्र लोभग्रह इति ज्ञेयम् । **मानः** अहंता । **अविवित्सा** वेदितुमिच्छाशून्यता । **अकृपा** दीनेषु । जुगुप्सुता इतरसद्गोष्टीषु ।। १ ।।

१. स्तेया इति पाठान्तरम् ।

**द्वादशैते महादोषा मनुष्यप्राणनाशनाः[1] ।**
**एकैकशस्तु राजेन्द्र मनुष्यं पर्युपासते ।। २ ।।**

**वादिराजीयम्–** न क्रोधादिसमुदायस्य प्राणापहारित्वं, किन्तु प्रत्येक-मित्याह— **एकैकश इति** । हे राजन्! एते यं मनुष्यं पर्युपासते तस्य एकैकशः प्रत्येकं प्रत्येकं प्राप्य प्राणनाशनम् । शोकक्रोधाभ्याम् अग्निप्रवेशादिना प्राणनाशो दृष्टः । लोभेन दुर्गमदेशगमनादिना । कामेन परस्त्रीगमनादिना एवं सर्वत्र द्रष्टव्यम् ।। २ ।।

**सत्यधर्मीयम्–**एते द्वादश महादोषाः । मनुष्येत्यधिकारिमात्रपरम् । तेषां प्राणनाशनाः । प्राणान्नाशयंत्यदर्शनं गमयंतीति तथा । हे राजेन्द्र एकैकशो मनुष्यं स्वार्थे शस् । एकैकं मनुष्यं सर्व एते पर्युपासते ।।२।।

**यैराविष्टो नरः पापं मूढसंज्ञो व्यवस्यति ।। ३ ।।**

**वादिराजीयम्–** पापहेतुत्वमपि एषामाह— **यैराविष्ट इति** । **व्यवस्यति** करोति ।। ३ ।।

**सत्यधर्मीयम्–**यैराविष्टो नरः **मूढसंज्ञः** मूढाऽसद्विषयविषयिणी संज्ञा ज्ञानं यस्य सः । सन् **पापं** तद्धेतुभूतं कर्म **व्यवस्यति** कर्तुं निश्चिनोति । प्रारभत इति यावत् ।। ३ ।।

**[2]स्पृहालुरुग्रः पुरुषो[3] वदान्यो**
**बिभ्रत्कोपं मनसा यो विकत्थी ।**

---

१. नाशका इति पाठान्तरम् । २. स्पृहयालुः इति पाठान्तरम् । ३. परुष इति पाठान्तरम् ।

**[१]नृशंसधर्मा च जना ध्रुवं सदा**
**प्राप्याप्यर्थं नोत सदोपभुञ्जते[२] ।। ४ ।।**

**वादिराजीयम्–** पूर्वोक्तानां नृशंसानामप्यैहिकविरोधित्वमाह— **स्पृहयालुरिति** । प्रागुक्तचपलशब्दस्य अर्थानुवादः उग्र इति । पूर्वोक्त-मनस्वीशब्दस्य अर्थानुवादः वदान्य इति । परुषशब्दस्य मनसा कोपं बिभ्रदित्यन्वयः । विकत्थमान इत्यस्य विकत्थीति । एते षड्जनाः नृशंसधर्माः स्युः नृशंसस्य धर्मो येषां ते नृशंसधर्माः ।। ४ ।।

**सत्यधर्मीयम्–** स्पृहालुः । णिजन्तात्स्पृहिगृहीत्यादिनाऽऽलुच् । अयादेशाभावश्च छान्दसः । पूर्वं सर्वमेतदेतत्सजातीयं चोक्तम् । तदत्रा-नुक्तं ततः स्वीकार्यम् । किंचिदन्तर्भावनीयमिति मन्तव्यम् । उग्रः दृष्ट्या । परुषो भाषया । **वदान्यः** दाता चारुभाषो वा । ''वदान्यो दानशीले स्याद्वद्वान्यश्चारुभाषिणि'' इति विश्वः । कोऽयं ? मनसा **बिभ्रत्** धर्ता । तत्फलं लपति **विकत्थीति** । प्रलापशीलः । नृशंसः पूर्वोक्तस्पृहयालुत्वादि षट् प्रकारो धर्मो यस्यासौ तथा । सदा एते जनाः । अर्थं ध्रुवं प्राप्यापि सदा नोपभुञ्जते । आत्मनाशाद्वैतद्वियोगा-द्वेति । विस्तृतं चैतत्प्राक् समृद्धासमृद्धविवेकग्रन्थे ।। ४ ।।

**सम्भोगसंविद्विषमोऽवमानी[३]**
**दत्वा विकत्थी कृपणो बलीयान् ।**
**वर्गप्रशंसी वनितावमानी**
**सप्तैवोक्ताः पापशीला नृशंसाः ।। ५ ।।**

---

१. नृशंसधर्माः षडिमे जना वै इति तृतीयपादे पाठान्तरम् । २. सभाजयन्ते इति पाठान्तरम् । ३. अभिमानी इति पाठान्तरम् ।

**वादिराजीयम्–** एवं नृशंसषड्वर्गमभिधाय सप्तनृशंसानाह– **सम्भोगेति** । "[१]विषमेधनः" इत्यस्यार्थो विषम इति । अभिमानी, दत्वा विकत्थीत्यनेन दत्तानुतापित्वमुक्तं भवति । अन्यद्व्याख्यातं प्राक् ।। ५ ।।

**सत्यधर्मीयम्–** [२]सम्भोगसंविदित्यादयस्तु प्राग्विवृताः । विषमेधमान[१] इत्यस्यार्थो विषम इत्यनेनोक्तः । **अवमानी** महदवज्ञाता । दत्तानुताप इत्येतदर्थः दत्वा विकत्थीति । **वर्गप्रशंसी** कुटुम्बनिकुरम्बस्तोत्रपरः । बहुप्रशंसी । बहुप्रकारेणात्मस्तुतिपरः ।। ५ ।।

**धर्मश्च सत्यं च तपो दमश्च**
**अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।**
**दानं श्रुतं चैव धृतिः क्षमाच**
**महाव्रता द्वादश ब्राह्मणस्य ।। ६ ।।**

**वादिराजीयम्–** पूर्वोक्तानां गुणानां न केवलं तपोवृद्धिसम्पादकत्वं, किन्तु मोक्षादिपुरुषार्थहेतुत्वमपीत्याह— **धर्मश्चेत्यादि** । अत एव क्वचिदन्यथोक्तिर्न दोषाय । अत्र क्षमाशब्देन शमो लक्ष्यते ।। ६ ।।

**सत्यधर्मीयम्–** दृष्टमपि धर्मादयः साधयन्तीति तान् बोधयति– **धर्माश्चेति** । [३]व्याख्यातोऽयम् । ब्राह्मणस्य तज्जातीयस्य महाव्रता गतम् ।। ६ ।।

**य एतेभ्यः प्रच्यवेद्वादशेभ्यः[४]**
**सर्वामिमां पृथिवीं स प्रशासन्[५] ।**

१. प्रथमाध्याये एकोनविंशतिश्लोके । २. प्रथमे अष्टादशश्लोके । ३. प्रथमे विंशतिमे श्लोके । ४. द्वादशभ्य इति पाठान्तरम् । ५. प्रशिष्यादिति पाठान्तरम् ।

**त्रिभिर्द्वाभ्यामेकतो[१] वापि**
**नास्य स्वमस्तीति च वेदितव्यम् ।। ७ ।।**

**वादिराजीयम्–** एतान्गुणांस्तौति— **य एतेभ्य इति** । तादर्थ्ये चतुर्थी । **प्रच्यवेत्** स्वस्थानादिति शेषः । गुरुकुले निवसेदिति यावत् । ''त्रिभिः'' इत्यादितृतीया चतुर्थ्यर्थे । तथा च गुणत्रयप्राप्त्यर्थं, गुणद्वयप्राप्त्यर्थं, एकगुणप्राप्त्यर्थं वा यः प्रच्यवेत् सः सर्वां पृथिवीं विशिष्यात् । यद्वा यः त्रिभिः द्वाभ्यामेकतमेन वा युक्तः अस्येदं स्वं स्वकीयमिति वेदितव्यं नास्तीति योजना । स 'सर्वमीश्वराधीनं, मदधीनं न किञ्चित्' इति जानातीति तात्पर्यार्थः ।। ७ ।।

**सत्यधर्मीयम्–** योऽधिकारी एतेभ्यः द्वादशेभ्यः । धर्मादीन् कर्तुं दैववशात्प्रच्यवेत कर्मभूमिं प्रत्यागच्छेत् । त्रिभिः त्र्यर्थं तथा द्वाभ्यां द्व्यर्थम् । एकार्थं वा प्रच्यवेत् । स यदि सर्वां इमां पृथिवीं प्रशासंश्चेदपि अस्य स्वं किमपि नास्तीति मन्तव्यम् । अभीप्सितद्वादतदन्यतमालाभा-त्प्राप्ता भूरफलमेवेति भावः ।। ७ ।।

**दमस्त्यागोऽप्रमादश्च [२]इत्येतेष्वमृतं स्थितम् ।**
**एतानि ब्रह्मजात्यानि[३] ब्राह्मणानां मनीषिणाम् ।। ८ ।।**

**वादिराजीयम्–** दमादिस्वरूपं वक्तुं तान्स्तौति— **दम इति** । व्याख्यातमेतत् । **ब्रह्ममुख्यानां** ब्रह्म वेदः, परब्रह्म वा, तदेव मुख्यं येषां मनीषिणां एतानि भवन्तीति शेषः ।। ८ ।।

**सत्यधर्मीयम्–** अत्र प्रधानानि त्रीण्यभिधत्ते– **दम इति** । अप्रमादः

१. एकतमेन वाऽपि इति पाठान्तरम् । २. एतेष्वमृतमास्थितमिति पाठान्तरम् । ३. ब्रह्ममुख्यानामिति पाठान्तरम् ।

प्राङ्निरूपितः । इत्येतेषु यथायथं **अमृतं** ब्रह्म तज्ज्ञानं वा । मोक्षोवा स्थितं तद्वतामेतत्प्राप्यमित्यर्थः । ब्रह्ममुख्यानामिति पाठे ब्रह्म वेदो मुख्यं येषां तेषां वेदोक्तकर्मानुष्ठातृणामित्यर्थः । ब्रह्मजात्यानीति पाठे ब्रह्मणा वेदेनेति वा विषयतया सता हरिणेति वा । जात्यानि जातौ भवानि हि किल जात्यानि । तानि च शुद्धान्येवं भवन्तीति । शुद्धानि एतानि ब्राह्मणानां मनीषिणां कर्तव्यानि भवन्तीति शेषः । अमृतं यज्ञशेषे स्यात्पीयूषे सलिले धृते । अयाचितेच मोक्षे चेति विश्वः । ज्ञानामृतरसासिक्त इत्यादेः । वायुरनिलममृतमथेदं, मुख्यामृतः स्वयं राम इतीशावास्योपनिषद्भाष्यात् ।। ८ ।।

**सद्वाऽसद्वा परीवादो ब्राह्मणस्य न शस्यते ।**
**नरकप्रतिष्ठास्ते वैस्युर्य एनं कुर्वते सदा ।। ९ ।।**

**वादिराजीयम्–** प्रसङ्गाद्ब्राह्मणनिन्दा अनिष्टहेतुरित्याह— **सद्वेति** । लिङ्गव्यत्यासः पौराणिकत्वात् ।। ९ ।।

**सत्यधर्मीयम्– सद्वासद्वेति** । लिङ्गसर्वनामनपुंसकताचेति सामान्य-विवक्षया नपुंसकसतेति सदसदिति सम्भवति । परिवाददृष्टिश्चैतदपेक्षया बहिरङ्गेति न प्रवर्तते । उक्तं च महाभाष्ये शक्यं च क्षुदपहंतुमिति । सत् विद्यमानदोषविषयकः एवमसदविद्यमानदोषविषयकः परीवादः । तदाविष्कृतिव्यवहारः । उपसर्गस्य घञमनुष्ये बहुलमिति परीति भवति । ब्राह्मणस्य **न शस्यते** न प्रशस्त इति न कार्यः । ये नरा एनं परीवादं कुर्वते । ते नरकप्रतिष्ठाः नरकेषु प्रतिष्ठा स्थितिर्येषां तथा स्युरिति ।। ९ ।।

**दमोऽष्टादशदोषः स्यात्पुरा योऽत्र प्रकीर्तितः ।**
**लोकद्वेषं प्रातिकूल्यं अभ्यसूया मृषावचः ।। १० ।।**

**वादिराजीयम्–** 'दमोऽष्टादशदोषःस्यात्' इत्युक्तदमदोषानाह– **लोकद्वेष** इत्यादिना । **अभ्यसूया** परश्रियामसहिष्णुता ।। १० ।।

**सत्यधर्मीयम्–** दमविरोधितयोक्तानिदानीं विधिमुखेनाभिधत्ते– **लोकद्वेषमिति** । लोकद्वेष इति पाठः । **प्रातिकूल्यं** पराहितकृतिः । **अभ्यसूया** गुणेषु । दोषाविष्कृतिः **मृषावचः** ।। १० ।।

**कामः क्रोधः परादैन्यं परिवादोऽथ पैशुनम् ।**
**अर्थहानिर्विवित्साच मात्सर्यं प्राणिपीडनम् ।। ११ ।।**

**वादिराजीयम्–** **परादैन्यं** परस्मिन्स्वोत्तमे अदैन्यं 'स्वामी, अहं भृत्य' इति वचनाद्यभावः । **अर्थहानिः** प्रयोजनानुसन्धानशून्यत्वम् । **मात्सर्यं** स्वोत्तमगुणप्रद्वेषः ।। ११ ।।

**सत्यधर्मीयम्–** **परादैन्यं** कृपणेषु । श्रीमत्यव्युत्पादनम् । **अर्थस्य** परकीयस्य **हानिः** अर्थहानिः । **विवादः** शुष्ककलहः ।। ११ ।।

**ईर्ष्या मोहोऽतिवादश्च[1] संज्ञानाशोऽभ्यसूयता ।**
**तस्मात्प्राज्ञो न माद्येत सदा ह्येतद्विगर्हितम् ।। १२ ।।**

**वादिराजीयम्–** ईर्ष्या परगुणापलापः । **अभ्यसूयता** गुणेषु दोषत्वारोपः । **संज्ञानाशः** अधीतसच्छास्त्रविस्मरणम् । अन्यद्व्याख्यातं पूर्वाध्याये । यस्मादेतदुक्तदोषजातं विगर्हितं तस्मात् **प्राज्ञो न माद्येत** उक्तदोषाधीनो न भवेत् ।। १२ ।।

**सत्यधर्मीयम्–** **अतिवादिता** बहुभाषिता । **संज्ञानाशः** स्मृतिभ्रंशः । **अभ्यसूयता** च तच्छीलता एतस्मात् **प्राज्ञो** ज्ञानी । न माद्येत । एतद्वशः सन् । अत एतज्जाते सदा **विगर्हितं** निन्दितम् ।। १२ ।।

१. विवादश्च इति पाठान्तरम् ।

**सौहृदे वै षड्गुणा वेदितव्याः**
**प्रिये हृष्यंत्यप्रिये च व्यथन्ते ।**
**स्यादात्मनः सहितं याचते यो**
**ददात्ययाच्यमपि देयं खलु स्यात् ।। १३ ।।**

**वादिराजीयम्–** प्रसङ्गात्सौहृदगुणानाह— **सौहृद इति ।** तस्य प्रिये सति हृष्यन्ति, अप्रिये सति व्यथन्ते ते सुहृद इति शेषः । **आत्मनः** स्वस्य यत् **सुहितं** सुष्टु हितं, **यच्चायाच्यं** याचितुमयोग्यमपि स्यात् तदपि **याचते** याच्यमानाय यो ददाति, यदि तद्वस्तु **देयं** दातुं शक्यं **खलु** निश्चितं स्यात्, सोऽपि सुहृदिति शेषः ।। १३ ।।

**सत्यधर्मीयम्–** सौहृदे संपादनीये गुणाः षट् **वेदितव्याः** ज्ञेयाः । क्रमात्तान् गुणानाह – **प्रिय इति ।** येनेच्छन्ति सौहृदं तस्य प्रिये जाते स्वेष्टे यथा तथा **हृष्यन्ति** तुष्यन्ति । **अप्रिये** दैविके व्यथते । तोषे तोषोऽनुतापः पापकर्मणि कृते नेत्युक्तौ सौहृदभङ्गः स्यादित्यनुतापमात्रं तदप्यन्तरेवेति द्वौ गुणौ । तृतीयमाह– **स्यादिति । यः** मित्रम् । **अयाच्यं** याचनीयेन सह नयाच्यमपि याचते चेत् । तत् देयम् **खलु** निश्चयेन स्यात् ।। १३ ।।

**इष्टान् पुत्रान् विभवांश्चापि दारान्**
**[१]अभ्यर्थितश्चार्हता शुद्धभावः ।**
**त्यक्तद्रव्यः सच यन्नेह[२] कामान्**
**भुङ्क्ते कर्म स्वाशिषं[३] बाधते च ।। १४ ।।**

---

१. अभ्यर्चित इति पाठान्तरम् । २. संवसेन्नैवेति संवसेन्नेहेति च पाठान्तरम् । ३. स्वासितमिति स्वाशिवमितिच पाठान्तरम् ।

**वादिराजीयम्–** एवमुत्तरत्रापि तदेव विवृणोति— **इष्टानिति** । यः **अर्हता** योग्येन **अभ्यर्चितः** याचितः सन् **शुद्धभावः** मनःसन्तोषपूर्वकं इष्टानपि **विभवान्** अर्थसञ्चयान् दारान् पुत्रादीन्ददाति अयं तृतीयो गुणः । यश्च **त्यक्तद्रव्यः** अयाचितोऽपि तदभिप्रायं ज्ञात्वा त्यक्तद्रव्यः सन्, विषयाननादृत्येति शेषः । **न संवसेत्** न वसेदेव । अयं चतुर्थो गुणः । यच्च **कर्म** तदीयकर्मसाध्यमन्नादिकं च स्वयं भुङ्क्ते । तन्निमित्तं **स्वाशिषं** स्वमनोरथं बाधते च । यद्वा सौहृदशब्देन मित्रत्वहेतुरूपस्त्यागो लक्ष्यते । तत्र 'प्रिये हृष्यन्ती'त्यादयः षड्गुणाः वेदितव्याः । 'संवसेन्नेह कामान्' इति पाठे अयाचितोऽपि ब्राह्मणेभ्यो द्रव्यत्यागं कुर्वन् **इह** कर्मणि क्रियमाणे **कामान्** विषयान् **न संवसेत्** नोपभुञ्जीत । तथा **कर्म** प्राक्सञ्चितकर्मफलं ईश्वरेच्छया प्राप्तं भुङ्क्ते । **स्वाशिषं** स्वार्थं आशंसमानः बाधते इत्यर्थः ॥ १४ ॥

**सत्यधर्मीयम्–** अवाच्यमित्युक्तं याच्येन सह तत्प्रकारमाह – **इष्टान् पुत्रान् विभवांत्संपदश्चेति** । याच्यान् **दारान्** स्वभार्यां अयाच्यां **अर्हता** योग्येन मित्रेण । प्रार्थितो याचितः **शुद्धभावः** अचञ्चलचेतस्कः याचमानाय तत्सर्वं ददाति । तेन च तत्सौहृदेच्छोरात्मनः सुहितं तृप्तिः स्यात् । खलु निश्चयः । चित्तैककण्ठ्यात् । अयं तृतीयो गुणः । अथ चतुर्थमाह – **त्यक्तद्रव्य इति** । यस्मै सर्वस्वं द्रव्यं दत्तं तस्य इह भूमौ तद्गेहे कामान् । पापबुद्धितः न सेवेत । तेन च सौहार्दभङ्गापत्तेः । अयं च चतुर्थः । पञ्चमं प्रपञ्चयति – **भुङ्क्ते इति** । कर्मणाऽर्जितं कर्मफलमेव धनादि भुङ्क्ते । न तु तदार्जितं स्पृशेत् । षष्ठं च स्पष्टयति – **स्वाशिषं** स्वश्रेयः तदर्थं बाधते नाशयतीति । स्वश्रेयस्त्यत्का तद्धितं चरेत् । **स्वासितमिति** पाठे स्वस्थानमित्यर्थः । तत्याग एतद्योगक्षेमौ स्यातां चेत् तत्यजेदित्यर्थः **स्वाशिवमिति** पाठे स्वस्य आशिवं बाधते चेदित्यर्थः ॥ १४ ॥

**द्रव्यवान् गुणवानेव त्यागी भवति सात्विकः ।**
**पञ्चभूतानि पञ्चभ्यो निवर्तयति तादृशः ।। १५ ।।**

**वादिराजीयम्–** उक्तत्यागे कारणमाह — **द्रव्यवानिति** । यो द्रव्यवान् यश्च गुणवान् यश्च सात्विकः स एव त्यागी भवतीति योजना । त्यागस्य फलमाह— **पञ्चभूतानीति** । पञ्चेन्द्रियाणि । इन्द्रियाणां भूतजातत्वात् । **तादृशः** उक्तत्यागी पञ्चभूतानि पञ्चभ्यो विषयेभ्यो निवर्तयतीत्यर्थः ।। १५ ।।

**सत्यधर्मीयम्– द्रव्यवान्** दानोपयोगिद्रव्यवान् गृहस्थः **गुणवान्** उक्तगुणसंपन्नः **त्यागी** दाता पुरुषः **सात्विकः** सत्वगुणप्रधानः सत्वं सुखे सञ्जयतीत्यादेः सुखी भवतीत्यर्थः । तादृश एव च **पञ्चभूतानि** तदात्मकानीन्द्रियाणि पञ्चभ्यः शब्दादिविषयेभ्यो **निवर्तयति** विषय-विरक्तः सन् भगवदुपासको भवतीति भावः ।

**एतत्समृद्धमप्यृद्धं तपो[1] भवति केवलम् ।**
**सत्यात्प्रच्यवमानानां सङ्कल्पेन समाहितम् ।। १६ ।।**

**वादिराजीयम्–** एवं तपसो ऋद्धत्वसमृद्धत्वयोः साधारणं केवलत्वं विस्तरेणाभिधायेदानीं समृद्धत्वे साधारणं कारणमाह— **एतत्समृद्धमिति ।** केवलमपि एतत्तपः **सत्यस्य** मुक्तामुक्तनियामकस्य भगवतोऽवबोधनात् **समृद्धं** अनन्तफलदं भवति । न केवलं तपः किन्तु यज्ञास्तत एव **प्रवर्तन्ते** प्रकर्षेण फलदा भवन्ति । ''यदेव विद्यया करोति'' इति श्रुतेः । अवधारण-व्यावर्त्यमाह— **सत्यादिति । सत्यात्** भगवतः **प्रच्यवमानानां,** तज्ज्ञानशून्यानामिति यावत् । साकल्येन फलं सङ्कल्पेन **समाहितं** अनुष्ठितं असमृद्धं भवतीति शेषः ।। १६ ।।

१. तत इति पाठान्तरम् ।

**सत्यधर्मीयम्–** उपसंहरति – **एतदिति । एतत्** विषयवैराग्यरूपं समृद्धं तत्वज्ञानिनः प्रति । ऋद्धं चेतरेषां तपो भवति । यतस्तेषां मत्तत्वाज्ञानिनामत एव सत्यात्प्रच्यवमानानां तज्ज्ञानरहितानां सङ्कल्पेन **समाहितं** कृतम् । फलकामनया कृतत्वात्तेषामृद्धमेव भवतीति भावः ।। १६ ।।

**ततो[1] यज्ञः प्रजायेत सत्यस्यैवावबोधनात् ।**
**मनसाऽन्यस्य भवति वाचाऽन्यस्योपकर्मणा[2] ।। १७ ।।**

**वादिराजीयम्–** यद्यप्यनेवंवित् महत्पुण्यं करोति, ''तद्धास्यान्ततः क्षीयत'' इति श्रुतेः मनोवाक्कर्मणामेकविषयत्वमपि तपसः सिध्यादिकारणमिति भावेन दुरात्मस्वभावमाह— **मनसेति ।** दुरात्मा मनसाऽन्यस्य व्यापरस्य वाचाऽन्यस्य वा, कर्मणा च ततोऽन्यस्य कर्ता भवति ।। १७ ।।

**सत्यधर्मीयम्– ततः** सङ्कल्पादेव यज्ञः बहुविधः प्रजायेत । तस्यैव विवरणम् – **सत्यस्यैवेति । सत्यस्य** भगवतोऽवबोधनान्निमित्तादन्यस्य ज्ञानिनो मनसा यज्ञो भवति । यथा ज्ञानिनस्त्रितस्य कूपे भ्रात्रा पातितस्य मनसैव कृत्स्नो यज्ञः । तत्कथातु मन्त्रवर्णे त्रितः कूपेऽवहितो देवानाह्वयतेत्यादौ भारते च सुप्रसिद्धा । **अन्यस्य** मध्यमाधिकारिणः **वाचा** ब्रह्मयज्ञादिरूपो भवति । विशेषतो वेदनिष्ठो भवतीत्यर्थः । **अन्यस्य** केवलं प्राकृतस्य कर्मणा घृतहविरादिद्रव्यात्मको भवतीत्यर्थः । ''एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे'' इत्यादेः ।। १७ ।।

**[3]सङ्कल्पसिद्धं पुरुषं[4] सङ्कल्पादधितिष्ठति[5] ।**
**ब्राह्मणस्य विशेषेण किंचान्यदपि मे शृणु ।। १८ ।।**

१. तप इति पाठान्तरम् । २. उत कर्मणेति पाठान्तरम् । ३. सङ्कल्पसिद्धः, इति पाठान्तरम् ४. पुरुष इत्यपि पाठान्तरम् । ५. सङ्कल्पसिद्धं पुरुषमसङ्कल्पोऽधितिष्ठति इति द्वितीयपादे पाठान्तरम् ।

**वादिराजीयम्– सङ्कल्पसिद्ध इति । सङ्कल्पः** सं समीचीनः कल्पः पक्षः मनोवाक्कर्मणामेकविषयत्वलक्षणः सिद्धः सिद्धान्तो यस्य सः तथा । तादृशः पुरुषः **सङ्कल्पात्** मनोवाक्कर्मणामेकविषयत्वात् **अधितिष्ठति** अधिकत्वेन वर्तते । अतः सता तत्सम्पाद्यमिति भावः । 'सङ्कल्पसिद्धं पुरुषमसङ्कल्पोऽधितिष्ठति' इति पाठे **असङ्कल्पः** मनोवाक्कर्मभिः समीचनैकपक्षरहितः दुरात्मा **सङ्कल्पसिद्धं** वागादिना समीचीनैकपक्षेण सिद्धप्रयोजनं पुरुषं **अधितिष्ठति** अधिकतया तिष्ठति । ततोऽप्यहमेव कुशल इति मन्यत इति भावः । एतादृशस्य खलस्वभावत्वात्सता मनोवाक्कर्मणामेकविषयत्वं सम्पाद्यमिति भावः । एतच्च ब्राह्मणस्यावश्यकमित्याह— **ब्राह्मणस्येति** । तस्यैव कर्तव्यान्तरमाह— **किञ्चेति** ।। १८ ।।

**सत्यधर्मीयम्–** एवमुक्तरीत्या तारतम्येनैव सत्यसङ्कल्पत्वादिकमपि सिध्यतीत्याह– **सङ्कल्पसिद्धमिति** । सङ्कल्पः सिद्धो यस्य तं पुरुषं प्रति सङ्कल्पादेवाधितिष्ठति । सर्वो विषय इति शेषः ।''स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति'' इत्यादिश्रुतेः । **ब्राह्मणस्य** ब्रह्मज्ञानिनस्तु **विशेषेण सङ्कल्पात्** भगवत्कामानुकूलकामादिति यावत् । सङ्कल्पितोऽर्थः सिध्यतीत्यर्थः । किंचान्यदपि उक्तविद्याफलं **मे** मत्तः शृणु ।। १८ ।।

**अध्यापयेन्महदेतद्यशस्यं**
**वाचो विकारं कवयो वदन्ति ।**
**अस्मिन्योगे सर्वमिदं प्रतिष्ठितं**
**य एतद्विदुरमृतास्ते भवन्ति ।। १९ ।।**

**वादिराजीयम्–** प्रतिज्ञातमाह— **अध्यापयेदिति** । यत् महत् अनन्तगुणपूर्णं **यशस्यं** यशःसम्पादकं यच्च कवयो **वाचोविकारं** वाचां

वेदवाचां, विकारं विविधाकारम् उक्तं कवयो वदन्ति । तदेतत् ब्रह्म **अध्यापयेत्** शिष्यान् प्रत्युपदिशेत् । तस्यैवोपदेशे निमित्तमाह – **अस्मिन्निति । योगे** युज्यते सर्वैर्गुणैरिति योगः भगवान् तस्मिन् अस्मिन् **सर्वं इदं** जगत्प्रतिष्ठितं स्थितम् । य एतद्ब्रह्म विदुः ते अमृता भवन्ति । तस्मादेतस्याध्ययनविषयत्वमावश्यकमिति भावः ।। १९ ।।

**सत्यधर्मीयम्–** तदेव फलं स्तुवन् विशदयति – **अध्यापयेदिति । एतत्** योगशास्त्रं **अध्यापयेत्** शिष्यान् ग्राहयेत् । कीदृशं **महत्** सर्वशास्त्रोत्तमम् । **यशस्यं** यशःप्रदं **कवयः** कवयितारो ज्ञानिनः यद्वदंति नानाविधाध्यात्मशास्त्रं कुर्वन्ति । तत् **वाचः** अस्मदुक्तिरूपाया विकार-मेव कुर्वन्ति । कथमेतदित्यतो वक्ति – **अस्मिन्निति । अस्मिन् योगे** शास्त्रे **इदं सर्वं** सर्वशास्त्रप्रतिपाद्यप्रमेयं **प्रतिष्ठितं** प्रतिपादितमस्ति यतोऽत इति शेषः । ये **एतत्** शास्त्रं **विदुः** जानीयुः **अमृता** मुक्तास्ते भवन्ति ।। १९ ।।

**न कर्मणा सुकृतेनैव राजन्**
**सत्यं वदेज्जुहुयाद्वा जपेद्वा ।**
**तेनैव बालो मृत्युमत्येति राजन्**
**तरति चासौ न लभेतांतकाले ।। २० ।।**

**वादिराजीयम्–** ननु ''अपाम सोमं'' इत्यादिना कर्मणैव मोक्षाभि-धानात् ''य एतद्विदुः'' इत्यनुपपन्नमित्यत आह— **न कर्मणेति । सुकृतेन** सम्यगनुष्ठितेन कर्मणैव **मृत्युं** मिथ्याज्ञानं, ''मोहो मृत्युः'' इति प्रथमे अध्याये अभिधानात् नात्येति । मिथ्याज्ञानस्य ज्ञानैकनाश्यत्वादिति भावः । तथा च तन्मूलकस्य संसारस्य निवृत्तिः कर्मसाध्या नेति ज्ञानमावश्यकमिति भावः । एतदेव विवृणोति— **सत्यमित्यादिना । बालः** अनपरोक्षज्ञानी

यत् सत्यं वदेत्, जुहुयाद्वा जपेद्वा तेनैव मृत्युं नात्येति । अन्तकाल इति । उत्क्रमणसाध्यं सुखमपि न लभेत । तस्यापरोक्षज्ञानसाध्यत्वादिति भावः ।। २० ।।

**सत्यधर्मीयम्–** हे राजन् सुकृतेनैवशब्दोऽप्यर्थे । एवमुत्तरार्धे । अङ्गवैकल्यादिरहितेनापि **कर्मणा** नित्यकर्मणा **बालः** अज्ञानी **मृत्युं** बन्धनं नात्येति । सत्यं वदेत् । **जुहुयात्** वैतानिकं काम्यं कर्म कुर्यादिति यावत् । जपेत् मन्त्रान् इति यत् तेनापि न मृत्युमत्येति । अतंकाले एतत्फलानुभवमन्तरेति सुखं **न लभेत** न प्राप्नुयात् । भगवज्ज्ञानं विनाऽनुष्ठितं सर्वं क्षयिष्णुफलं भवतीत्यर्थः । ''इष्टापूर्तं मन्यमाना वरिष्टं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्टे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति'' इति श्रुतेः ''तद्धास्यांततः क्षीयत एव'' इति श्रुतेश्च ।। २० ।।

**तूष्णीमेकमुपासीत [1]नचेष्टेन्मनसाऽपि[2] च ।**
**तथा संस्तुतिनिन्दभ्यां प्रीतिरोषौ विवर्जयेत् ।। २१ ।।**

**वादिराजीयम्–** भगवदपरोक्षज्ञानसाधनमाह— **तूष्णीमिति** । **एकं** स्वगतभेदरहितं स्वसमानद्वितीयरहितं वा ब्रह्म **तूष्णीं** वाङ्नियमादुपासीत । उपासनकाले मनसाऽपि विषयान्नेछेत् च । इत्थम्भावान्तरमाह— **अथेति** ।। २१ ।।

**सत्यधर्मीयम्–** तर्हि किं कुर्यादित्यतो वक्ति – **तूष्णीमिति । एकं** प्रधानं श्रीनारायणम् । **उपासीत** तद्विषयश्रवणमननिदिध्यासनं कुर्यात् । तूष्णीमित्यस्य व्यावर्त्यमाह– मनसाऽपि **न चेष्टेत्** न चेष्टेतेति । तदन्यविषये चेष्टां न कुर्यादित्यर्थः । तथा संस्तुतिश्च निन्दाच ताभ्यां

१. न गच्छेत् इति पाठान्तरम् । २. अथेति पाठान्तरम् ।

प्रीतिरोषौ विवर्जयेत् । स्तुत्या प्रीतिं न कुर्यात् निन्दया रोषं न कुर्यादित्यर्थः ।। २१ ।।

**अत्रैव तिष्ठन् क्षत्रिय ब्रह्माविशति[१] पश्यति ।**
**वेदेषु चानुपूर्व्येण[२] विद्वन्नेतद्ब्रवीमि ते ।। २२ ।।**

**।। इति श्रीमन्महाभारते शतसाहस्र्यां संहितायाम् उद्योगपर्वाणि सनत्सुजातीये चतुर्थोऽध्यायः समाप्तः ।।**

**वादिराजीयम्–** उक्तोपासनाफलमाह— **अत्रैवेति** । हे क्षत्रिय! अत्रोपासनायां तिष्ठन्नेव ब्रह्म पश्यति । भगवदपरोक्षज्ञानानन्तरं **आवसति** सम्यग्वैकुण्ठादिलोके वसति । स्वोक्तस्य निर्मूलशङ्कामपाकुर्वन्नाह— **वेदेष्विति** । वेदेषु कथितमिदं सर्वं **आनुपूर्वेण** त्वदीयप्रश्नक्रमानुसारेण अहं ते **ब्रवीमि** अब्रुवमिति ।। २२ ।।

**।। इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातीये श्रीवादिराजतीर्थविरचिते विषमवाक्यप्रकाशे चतुर्थोऽध्यायः ।।**

**सत्यधर्मीयम्–** हे क्षत्रिय अत्रैव मदुक्तभगवदुपासनामार्ग एव तिष्ठन् पुरुषः ब्रह्म **पश्यति** अपरोक्षतो जानाति । तदनन्तरं च **आविशति** सायुज्यभाक् चेत् तदङ्गेषु प्रविशति । तदितरश्चेत् प्रलये तदुदर इति शेषः । एतच्च नाविश्वसनीयमित्याह– वेदेषु अनुपूर्व्येण **एतत्** प्रमेयजातं विद्वानहं **ते** तुभ्यं ब्रवीमि । न तु बुध्या परिकल्प्येत्यर्थः ।। २२ ।।

**।। इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वाद्यनेकगुणसंपन्नश्रीमद्रामचन्द्रदेवदिव्यपादपद्माराधकश्रीमत्सत्यवरतीर्थश्रीपादकरकमलसञ्जात-श्रीमत्सत्यधर्मयतिकृतायां व्याख्यायां श्रीमदुद्योगे सनत्सुजातीये चतुर्थोऽध्यायः ।। ४ ।।**

---

१. आवसति इति पाठान्तरम् । २. आनुपूर्वेण इति पाठान्तरम् ।

# अथ पञ्चमोऽध्यायः

**सनत्सुजात उवाच–**

**यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।**
**तद्वै देवा उपासन्ते यस्मादर्को विराजते ।**
**योगिनस्तत्प्रपश्यन्ति भगवन्तं सनातनम् ।। १ ।।**

**वादिराजीयम्–** पूर्वाध्याये ''य एतद्विदुरमृतास्ते भवन्ति'' इति ब्रह्मज्ञानेन मोक्षो भवतीत्यभिहितं तत्र कीदृशं ब्रह्मस्वरूपं केषां च तज्ज्ञानं भवतीति जिज्ञासायां तदुभयं निरूपयत्यस्मिन्नध्याये ।

तत्रादौ सर्वप्रकाशकत्वदेवोपासकत्वादिमहिमानं वदन् तज्ज्ञाने अधिकारिण आह— **यदिति । यत्** व्याप्तं **शुक्रं** शुद्धं **महज्ज्योतिः** सर्वप्रकाशकं **दीप्यमानं** प्रकाशमानं **महद्यशः** पूर्णं यस्माच्चार्को विराजते **तद्वै** ब्रह्म **देवाः** ब्रह्माद्याः उपासन्ते । देवा इत्यनेन ''विश्वेदेवा उपासत'' इत्यादिश्रुतिप्रसिद्धिं दर्शयति । **तं** पूर्वोक्तगुणविशिष्टं **ब्रह्म योगिनः** ध्यानादियोगसम्पन्नाः **प्रपश्यन्ति** प्रकर्षेण जानन्ति ।। १ ।।

**सत्यधर्मीयम्–** पूर्वाध्यायान्ते ब्रह्माविशति पश्यतीति सामान्येनोक्तम् । तत्राधिकारिणं तज्ज्ञेयं ब्रह्मरूपं च दर्शयति– **यत्तदिति** । ततत्वात्तत् ब्रह्म । **शुक्रं** तच्छोकराहित्यात्, शुद्धत्वाच्च । **महत्** सर्वतोऽप्युत्कृष्टं **ज्योतिः** प्रकाशरूपम् । ऐकपद्येतु संज्ञात्वादान्महत इत्यस्योद्देश्यविधेयभावव्यत्ययेन तस्यानित्यत्वादात्वा भावः । सर्वावभासकमिति तदर्थः । **दीप्यमानं** स्वयं भ्राजमानम् । **महद्यशः** तन्नामकं ''तस्य नाम महद्यशः'' इति श्रुतेः । अत एव ''बहुलं तणि'' इत्यात्वाभावः । **तत्** ब्रह्म **देवा** ब्रह्मादय उपासते । असङ्गतीत्यस्येदं रूपम् । यस्माच्च **अर्कः** सूर्यो विराजते । येन सूर्यस्तपति

तेजसेद्ध इति श्रुतेः । देवा इति निपातः ''मध्ये वामनमासीनं विश्वेदेवा उपासते'' इत्यादिश्रुतिप्रसिद्धिं द्योतयति । एवं– भूतं **तत्** परब्रह्मात्मकं **सनातनं** पुरातनं सनादं वा **भगवन्तं** श्रीनारायणम् ।

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ।।

इति प्रमाणप्रदर्शितैश्वर्यादिगुणशालित्वस्य भगवतोऽन्यत्रादर्शनाद्यथोक्तं श्रीमद्भागवते– ''अन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः'' इति । **योगिनः** ध्यानयोगरता मुनय एव प्रपश्यन्ति न त्वितरे । अतो नास्मदाद्यदर्शनेन तदपलापः कार्य इति सूचयति । एवमुत्तरत्रैतदर्धार्थो बोध्यः ।। १ ।।

**शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते ।**
**तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। २ ।।**

**वादिराजीयम्–** इदानीं भगवतः चतुर्मुखोत्पादकत्वमाह— **शुक्रादिति ।** यस्मात् शुक्रात् चतुर्मुखाख्यं ब्रह्म **प्रभवति** उत्पद्यते, उत्पन्नं च शुक्रेण वर्धते 'यो ब्राह्मणम्' इति श्रुतेः । तच्छुक्रं ज्योतिषां मध्ये स्थितम् । तैः **अतप्तं** अप्रकाशितं **तपति** प्रकाशते । कीदृशं ? तेषां ज्योतिषां **तापनं** प्रकाशकम् ।। २ ।।

**सत्यधर्मीयम्–** तस्मादेवैतच्छुक्राद्ब्रह्म चतुर्मुखाख्यं **प्रभवति** उत्पद्यते । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इति श्रुतेः । चित्प्रकृतिरूपं वा तत्रापि मम योनिर्महद्ब्रह्मेति तत्प्रयोगात् मम योनिरिति तस्या-

स्तत्कारकत्वश्रुतेश्च । वर्धते विराट् सृष्टिद्वारा प्रकृतिस्तु स्वाभिमन्यमान-वृद्धिद्वारेति विवेकः । **ज्योतिषां** सूर्यचन्द्राग्न्यादीनां मध्ये स्वयमितरातप्रम-प्रकाशितमपि "न तत्र सूर्यो भाति" इत्यादेः **तपति** स्वयमेव प्रकाशते । न केवलमेतावत् किन्तु **तापनं** सूर्यादिप्रकाशकम् । "तमेव भान्तमनुभाति सर्वम्" इत्यादेः ।। २ ।।

**पूर्णात्पूर्णमुद्धरन्ति पूर्णात्पूर्णं प्रचक्षते ।**
**हरन्ति पूर्णात्पूर्णं च पूर्णमेवावशिष्यते ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। ३ ।।**

**वादिराजीयम्–** योगिनः महिमान्तरमाह— **पूर्णादिति । पूर्णात्** गुणपूर्णात् मूलरूपात् **पूर्णं** अवताररूपम् उद्धरन्ति स्वकीयप्रयोजनार्थं देवाद्याः पृथक्कुर्वन्ति । पूर्णात् पूर्णं हरन्ति । च भूम्यादिलोकं प्रत्यानयन्ति । श्वेतद्वीपादिकं प्रति गत्वा अनेकविधैस्स्तोत्रैस्तं प्रसाद्य स्वप्रयोजननिष्पत्यर्थं पूर्णमेव स्थितं रामादिरूपं मूलरूपात्पृथक्कृत्वा भूरादिलोकमानयन्तीति यावत् । प्रलयकाले च सर्वाणि रूपाणि एकीकृत्य पूर्णमेवावशिष्यते । उक्तार्थे किं प्रमाणमित्यपेक्षायमाह – **पूर्णात्पूर्णमिति** । वेदाः उक्तमर्थं प्रचक्षते सतात्पर्यं कथयन्ति । अनेन "पूर्णमदः पूर्णमिदं" इति श्रुतिरुक्तार्थे प्रमाणमित्युक्तं भवति ।। ३ ।।

**सत्यधर्मीयम्–** ज्ञानिनः सृष्टिकाले पूर्णान्मूलरूपात् पूर्णमेवावतार-रूपं **उद्धरन्ति** उद्रिक्तं कुर्वन्ति । बुध्येति शेषः । तथा च तत्पूर्णात् उद्रिक्तमेतदवताररूपमपि पूर्णमेव **प्रचक्षते** शिष्यादिभ्य उपदिशन्ति । स्थितिकाले **पूर्णात्** ल्यपब्लोपनिमित्ता पञ्चमी पूर्णमूलरूपमुद्दिश्यैव **पूर्णं** अवताररूपं **हरन्ति** तत्संश्लिष्टं जानन्तीत्यर्थः । ततश्च पूर्णमेवा-वशिष्यते । प्रलये मूलरूपम् । तथा च श्रूयते वाजसनेयके–

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।। इति ।। ३ ।।

**[१]अथापोऽद्भ्यः सलिलं[२] तस्य मध्ये**
**[३]उभौ देवौ शिश्रियातेऽन्तरिक्षे ।**
**[४]आदध्रीचीः सविषूचीर्वसाना-**
**[५]वुभौ बिभर्ति पृथिवीं दिवं च ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। ४ ।।**

**वादिराजीयम्–** श्रीभूरूपधारकत्वादिमहिमानमाह—आप इति । **अथ** सूक्ष्मसृष्ट्यनन्तरम् **अद्भ्यः** बाह्यावरणोदकेभ्य **आपः** ब्रह्माण्डान्तः-स्थितगर्भोदकरूपाः, उत्पन्ना इति शेषः । **तस्य** सलिलस्य मध्ये **अन्तरिक्षे** अवकाशे **उभे देव्यौ** श्रीभूदेव्यौ शिश्रियाते । **सध्रीचीः** समीचीनाः **सविषूचीः** विष्वक् वर्तमानाः आपः **वसानः** वस्त्रवत् (वसनवत्)परितो बिभ्राणः । यद्वा– **सध्रीचीः** पूर्वादिदिशः **विषूचीः** आग्नेयादिविदिशः । द्वितीया सप्तम्यर्थे । तासु वसानो निवसन् इत्यर्थः । उक्तं च ऐतरेयभाष्ये– ''सध्रीचीनासु पूर्वादिदिक्ष्वेतौ च चतुर्ष्वपि । नित्यदा वसतः कोणदिक्ष्वप्यासु विषूचिषु'' इति । **सः** वेदादिषु प्रसिद्धः **सः** परमात्मा **पृथिवीं** तदभिमानिनीं भूदेवीं **दिवं** द्योतमानां श्रीदेवीं चेत्युभे **बिभर्ति** धारयति पोषयति च ।

''अथापोऽद्भ्यः सलिलं तस्य मध्ये उभौ देवौ शिश्रियातेऽन्तरिक्षे ।

आदध्रीचीः सविषूचीर्वसानावुभौ बिभर्ति —'' इत्यादि । पाठान्तरे

---

१. आपोऽथादृभ्य इति पाठान्तरम् । २. तत्सलिलस्य इति पाठान्तरम् । ३. उभे देव्यौ इति पाठान्तरम् । ४. स सध्रीचीः स विषूचीर्वर्तमाना इति पाठान्तरम् । ५. उभे इति पाठान्तरम् ।

तु—**अथ** महदादिसृष्ट्यनन्तरम् **आपः** तदुपलक्षितपञ्चमहाभूतानि, सृष्टाः इति शेषः । **अद्भ्यः** पञ्चभूतेभ्यः **सलिलं** पञ्चभूतात्मकं स्थूलदेहमुत्पाद्य **तस्य** सलिलस्य **मध्ये अन्तरिक्षे** हृदयाकाशे **उभौ देवौ** नारायणमुख्यप्राणौ शिश्रियाते । न केवलं शरीराकाश एवोभयोरवस्थानं, अपितु सर्वत्रेति भावेन तयोर्विशेषमाह— **आदध्रीचीरिति । सविषूचीः** विष्वग्गमनात् विषूच्यो विदिशस्ताभिः सह वर्तन्त इति सविषूच्यः, ताः सविषूचीः । आदध्रीचीः आभिमुख्येन ध्रीयमाणाः, अवस्थिता इति यावत् । अञ्चन्तीति लयमिति आदध्रीच्यस्ताः आदध्रीचीः । आग्नेयादिविदिक्सहिताः प्राच्यादिदिश इति यावत् । **वसानौ** आच्छादयन्तौ । नारायणमुख्यप्राणौ उभौ पृथिवीं दिवं च बिभर्ति बिभ्रतः । वचनव्यत्यासः छान्दसः अस्मिन्नर्थे प्रागुदाहृतवचनमेव प्रमाणम् ।। ४ ।।

**सत्यधर्मीयम्– अथ** अस्मादवशिष्टात् । सृष्टिसमये आपः अजायन्त । ''अप एव ससर्जादौ'' इति मनुः प्रायस्त्वाभिप्रायेणाप एवेत्युक्तिः । ताभ्यः सलिलं अम्बूपलक्षितभूतपञ्चकसंवलितं शरीरं स्थूलं जातम् । तस्य मध्ये तत्रापि **अन्तरिक्षे** हृदयाकाशे एतदुक्तिः श्रौतसुपर्णत्वसङ्गत्यै । तथा च भागवते द्विखग इति । **देवौ** प्रकाश-मानौ । तत्रैकप्रकाशोऽनवधिरनन्यपरतन्त्रः अपरस्य च तत्तंत्र इति विवेकः । **शिश्रियाते** आश्रित्य वर्तेते । अन्तर्वर्तते । इत्येतावता न बहिरिति नेत्यप्याह– **आदध्रीचीः** आभिमुख्येनांचन्तीत्यादध्रीच्यः प्राचाद्या दिशः । विषूच्यो विष्वगञ्चन्त्यो हि विदिशस्ताभिः सहिताः सर्वा दिशो विदिशश्च **वसाना** वस्वाच्छादयन्तौ ।

अनेनैकस्य स्वतो व्याप्तिर्व्याप्तिरेकस्य प्रकाशत इति ज्ञेयम् । यावुभौ तयोर्मध्ये एको जीवखगः । पृथिवी अन्नम् । पृथिवी वा अन्नमिति

श्रुतेः । विभर्ति स्वोदरे । कर्मफलं भुङ्क्ते इति यावत् । इतरस्तु दिवं प्रकाशो ज्ञानमिति तदादिसर्वगुणं बिभर्ति । अथेत्यविभक्तिकनिर्देशः । सः अथः न विद्यतेऽन्नं प्राकृतं यस्य सः । अन्नं थमिति हि श्रुतिः । सलिलं सलीलमिति बृहद्भाष्योक्तेरुक्तेश्च तट्टिप्पणे ईकारह्रस्वतातु निरुक्तेरिति । वर्तत इति शेषः ।

द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति । सलिलमाविवेशेति वा । एकः सुपर्णः ससमुद्रमाविवेश । सुपर्णं विप्राः कवयो वचोभिः इत्याद्याः श्रुतयः ।

एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् । सुपर्णमुपधावतेत्यादि स्मृतयश्च जाग्रति । योगिन इति तु पूर्ववदिति केचित् ।

अपश्यं गोपामनिपद्यमानमाच पराच पथिभिश्चरन्तं ।

ससध्रीचीः सविषूचीर्वसाना आवरीवर्ति भुवनेष्वंतः । इत्यैतरेयोपनषदेतन्मूलम् । व्याख्याता चेयमाचार्यैः–

छन्दःसु संस्थितो विष्णुर्गोपायत्येव तद्विदम् ।
मन्त्रोऽप्यर्थमिमं प्राहापश्यं गोपामिति स्मह ।

इत्यारभ्य

आसमन्तात्पराक्चापि पञ्चभूतेभ्य ईश्वरः ।
वायुस्तत्स्थो हरिश्चैव चरत्यमितपौरुषः ।
सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि ।

नित्यदा वसतः कोणदिक्ष्वथासु विषूचिषु ।
अन्तश्च सर्वभूतेषु चरतो लोकसाक्षिणौ ।

इति गर्भीकृत्य ''विष्टब्धौ केशवेन हि'' इत्यन्तेन । अत्र प्राणः तज्जीव इत्येवेति न बहुविसंवाद इति यथायथमर्थौ ज्ञेयौ ।। ४ ।।

**चक्रे रथस्य[१] तिष्ठन्तं ध्रुवस्याव्ययकर्मणः ।**
**केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। ५ ।।**

**वादिराजीयम्– चक्रेणेति** । अव्ययकर्मणः **ध्रुवस्य** ध्रुवमण्डलस्य सम्बन्धिना **चक्रेण** ज्योतिश्चक्रेण **आवर्त्य** ग्रहनक्षत्रादीन्परितो भ्रामयित्वा तिष्ठन्तं, सूर्यस्य रथ इति शेषः । **केतुमन्तं** ध्वजसहितं तं भगवन्तम् **अश्वाः** सूर्यरथे नियुक्ताः सप्ताश्वाः **दिव्यं** लोकविलक्षणं **दिवि** अन्तरिक्षमार्गे वहन्ति ।। ५ ।।

**सत्यधर्मीयम्–** ज्ञानिनस्तच्छुक्रप्राप्तिः कथं भवतीत्यत एवं चेदित्यावेदयति – **चक्र इति । रथस्य** शरीररूपस्य **चक्रे** गणे । चक्रो गणे रथाङ्गे चेति विश्वः । **अव्ययकर्मणः** नित्यव्यावृत्तेः **ध्रुवस्य** स्वयमपि नित्यस्य । शुक्रस्य **केतुमन्तं** तद्विषयकं ज्ञानम् । केतुः सोऽस्यास्तीति तम् । अधिकारिणम् । केतुः केतश्चेतश्चित्रं क्रतुरसर्धीशचीमायावयुनमभिख्येत्येकादश प्रज्ञानामानीति वेदनिघण्टावुक्तेरिति गीताभाष्ये । केतुः केतश्चितिश्चित्तं मतिक्रतुर्मनीषामायेत्यभिधानमिति । **दिवि** प्रकाशरूपिण्यां मुक्तौ प्राप्यायातं प्रसादसुमुखं **दिव्यं** ज्ञानात्मकम् **अजरं** अजरामरं हरिं **अश्वाः** इन्द्रियाणि **वहन्ति** प्रापयन्ति । उक्तं च काठकोपनिषदि ।

१. चक्रेणावर्त्य इति पाठान्तरम् ।

तथाहि सा–

आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति ।

रथस्य तस्मिंस्तिष्ठन्तं यश्चैनं जीवं **केतुमन्तं** ज्ञानमन्तं चक्रे कृतवांस्तमित्यपि योजयन्ति । रथस्य चक्रं तिष्टन्तमित्यपि चक्रं रथस्य येमथुरित्यन्यत्रोक्तेः । पूर्ववदुर्वरितम् । ज्ञानवानैवेतदिन्द्रियाश्ववाही भगवन्तं प्राप्नोतीत्यर्थः ॥ ५ ॥

**न [१]सादृश्ये तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चिदेनम् ।**
**मनीषयाऽथो मनसा हृदाच**
**य एनं विदुरमृतास्ते भवन्ति ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ६ ॥**

**वादिराजीयम्– न सन्दृशे** इति । **अस्य** भगवतो रूपं **सन्दृशे** समीचीनज्ञानाय न तिष्टति, साकल्येन न ज्ञानविषयो भवतीत्यर्थः । कुत इत्यत आह— **न चक्षुषेति** । उपलक्षणमेतत् । कश्चिदप्यधिकारी **चक्षुषा** चक्षुरादिप्रमाणैरैनं साकल्येन **न पश्यति** न जानाति । ये च **मनीषया** शास्त्रोत्थबुद्ध्या । तथा तदेकनिष्ठेन **मनसा हृदा** तन्निष्ठत्वात्तत्प्रेरकत्वाच्च हृच्छब्दवाच्येन तत्प्रसादेनेति यावत् । **एनं** भगवन्तं स्वयोग्यतानुसारेण ये विदुः ते **अमृताः** मुक्ताः भवन्ति । "न सादृश्ये तिष्ठति रूपमस्ये"त्यपि कचित्पाठः । तत्रास्य भगवतो रूपं सादृश्ये उपमायां न तिष्ठतीत्यर्थः ।

१. संदृशे इति पाठान्तरम् ।

एतस्यान्योपमा नास्तीति यावत् । "भगवतो नीरूपत्वमुपमायोग्यत्वमुच्यत" इति श्रुतिः ।। ६ ।।

**सत्यधर्मीयम्–** किञ्चैतद्रूपं न चक्षुरादिगोचर इत्याह – **नेति । अस्य** भगवतो रूपं **सादृश्ये** आसमन्ताद्द्रष्टुं योग्यमादृश्यं आदृश्येन विषयेण सह वर्तत सादृश्यं ज्ञानं तादर्थे सप्तमी । ज्ञानार्थमित्यर्थः । **न तिष्ठति** स्तंभादिवदनायासेन दर्शनगोचरो न भवतीत्यर्थः । कुतः । कोप्येनं भगवंतं चक्षुषा न पश्यति । उपलक्षणमेतत् । सर्वेन्द्रियैर्न जानाति । कथं तर्हि तज्ज्ञानमित्यत आह– **मनीषयेति । हृदा** स्नेहेन सहितेन श्रवणादिसम्भृतमनीषया **अथो** तथा निश्चयात्मिकया बुध्या तत्पूर्वकेनेति यावत् । मनसा करणेन कश्चित् परमात्मानं पश्यतीत्यर्थः । फलमभिलपति– **य इति । ये** पुरुषा **एनं** भगवन्तं **विदुः** उक्तरीत्या जानन्ति ते **अमृता** मुक्ता भवन्ति । अनेन कटवल्लीनारायणोपनिषद्गत

न संदृशे तिष्टति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम् ।
हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ।

इति श्रुतिरर्थतः पठितेति ज्ञेयम् । योगिनस्तं प्रपश्यन्ति । अस्य सादृश्ये औपम्ये रूपं न तिष्टति । निरुपम इति यावत् । श्रूयते च– न तस्य प्रतिमा अस्ति यस्य नाम महद्यश इतीति व्याचक्षते । न तत्समश्चाभ्याधिकश्च दृश्यते । नास्ति नारायणसममित्यादि स्मृतयोऽपि भवन्ति ।। ६ ।।

**द्वादशपूगाः सरितो देवरक्षिता मध्वीशते ।**
**तदनुविधायिनस्तदा सञ्चरन्ति घोरम् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। ७ ।।**

**वादिराजीयम्–** महिमान्तरमाह— **द्वादश पूगा इति । द्वादशपूगाः** पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, मनो बुद्धिश्चेति द्वादश, तेषां पूगाः समूहाः । पुरुषाणां बहुत्वात्तत्सम्बन्धिनां समुदायानामपि बहुत्वमपेक्ष्य बहुवचनम् । **सरितः** सरन्ति विषयान्प्रति गच्छन्तीति सरितः । स्वतो विषयगमनस्वभावाः । **देवरक्षिताः** क्रीडादिगुणविशिष्टेन भगवता नियमिताः । **मधु** आपाततो मनोहरं विषयसमूहं प्रति । गन्तुमिति शेषः । **ईशते** समर्था भवन्ति । यदैव ते विषयान् प्रति गच्छन्ति तदा तदनुविधायिन्यः सदाचरन्ति । ''लोकेस्मिन्नि''ति पाठे[1] या द्वादशधाः द्वादशप्रकाराः तस्य भगवतो मदिष्ठाः 'मदि हर्षे' इति धातोः अतिशयेन सन्तोषकराः । याश्चेशते सज्जनानां पापानि परिहर्तुं समर्था भवन्ति ताः सरितो गङ्गायमुनाद्याः नद्यः इह लोके तदनुविधायिन्यः तस्य समुद्रगतबडवाग्निस्थनृसिंहस्यानुविधायिन्यो अनुसारिण्यो भूत्वा सदा चरन्ति प्रवहन्ति । नदीनां प्रवाहो भगवदर्थमेवेत्येतत्–

आपात्पतन्तेन्यः सुदुघाः अनुपस्पृशः ।
आयः स्फुरं गृहायत्तं सोममिन्द्रय पातवे ।। इति श्रुत्या,

भूतानि भूतोऽम्बुनिधानमध्ये भूत्वा हरिः सर्वहरोऽतिधाम्ना ।
अगाधमम्भो विदधाति भस्म यो वाडवाग्निर्नृहरिर्विचिन्त्यः ।।

इति कर्मनिर्णयोदाहृतवैहायससंहितावचनाच्च सिद्धम् ।। ७ ।।

**सत्यधर्मीयम्–** तान्येवेन्द्रियाणि दुर्विषयविषयाणि चानर्थप्रापकाणी-त्याह – **द्वादशेति ।** ज्ञानकर्मेन्द्रियाणीति दश । मन एकादशम् । द्वादशीतु शेमुषी । मनोबुद्धीतु द्वादश इति व्याक्यावसर एकादशद्वादशे इति तत्वप्रकाशिकायामुक्तेनैकादशद्वादशत्वे यथायथं ज्ञेये । पूगः

१. न दृश्यतेऽयं पाठो भारते ।

क्रमुकवृन्दयोरित्यमरः । विषयविचित्रतायाः पूगतोक्तिः । सरितः ता यथा सरन्ति तथा सरणशीलाः **देवरक्षिताः** हरिरक्षिताः । **मधु** विषय-जातम् । **ईशते** गोचरयितुं शक्ता भवन्ति । यदैवं तदा **तदनुविधायिनः** तदन्वभिद्रवणशीला जनाः सञ्चरन्ति नानायोनिषु भ्रमन्ति । अत इन्द्रियाणि भगवदेकविषयाणि कार्याणि । येन रक्षिता मध्वीशते ।

हे ईश ते प्रसादादेवेदं मधु विधूतं विधाय द्वादशपूगाः **अदेवरक्षिताः** अपूजिता अधर्मादिदातारस्ते । ब्रह्मेन्द्रादित्यनामका असुरास्तद्रक्षिताः सरितः मध्वित्यादिवत् । देवेन हरिणा रक्षितास्तु तदनुविधायिनस्तु घोरसंसारं यदा सञ्चरन्ति गमयन्ति तदा मधु मोक्षसुखम् । दातुमीशते । दैवरक्षितं च तदामध्विति पदमेकं वा । उक्तं च– ऋग्भाष्यादौ ''संनु-वोचामहै पुनर्यतो मे मध्वाभृतं ।'' ''आपूर्णं मधु मोक्षस्थसुखं पचसि मेऽग्निवत्'' । मदीयमाभृतं मधु आपूर्णं मोक्षसुखं मधु मोक्षस्थं सुख-मिति । मनःफलिपाटीत्यादिनोप्रत्यये नकारस्य धकारादेशे च निष्पन्न मधुशब्दस्य मन्यन्ते जना अतिशयेनेति सुखमप्यर्थः । मध्वित्यानन्द उद्दिष्ट इति स्मृतेरिति । **मधु** द्युलोकाद्युपलक्षितं मोक्षसुखं वा मधुद्यौरस्तु नः पितेत्यादेरिति । घोरं दुष्टफलं कर्मोद्दिश्य **सं** निवारणं चरन्ति । ''सः कोपे वारणेच'' इति विश्वः । इतरद्यथापूर्वम् । इति सदधिकारि-परतयाऽपि योजयन्ति ।। ७ ।।

**तदर्धमासं पिबति[१] सञ्चितं भ्रमरो[२] मधु ।**
**ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। ८ ।।**

**वादिराजीयम्– तदर्प्यमाणमपिबन्निति । भ्रमराः** मधुपानासक्तत्वा-

१. तदर्प्यमाणमपिबन् इति प्रथमपादे पाठान्तरम् । २. भ्रमरा इति पाठान्तरम् ।

त्तत्सदृशाः आदित्याः रुद्रा वसवः मरुतः साध्याश्चेति प्राच्यादिषु विद्यमानाः देवाः **तदर्प्यमाणं** तेन भगवता अर्प्यमाणं सञ्चितं स्वकर्मणा चार्जितं **मधु** आनन्दकरत्वात् मधुस्थानीयं परमात्मानं आदित्याद्याः **अपिबन्** उपजीवन्ति स्म । अयमर्थः छान्दोग्ये स्पष्टमभिहितः । न केवलमादित्यादिदेवानामेव भगवान्मधुपर्कत्वेनोपजीव्यः किन्तु सर्वभूतानामपीति भावेनाह— **ईशान इति । ईशानः** सर्वभूतानां स्वामी भगवान् । सर्वभूतेषु निमित्तसप्तमी । **हविर्भूतं** प्राणाग्निहोत्रे हविर्द्रव्यरूपमन्नमकल्पयत् ॥ ८ ॥

**सत्यधर्मीयम्–** किं च दृष्टान्तदार्ष्टान्तिकप्रदर्शनेनाह– **तदर्धमास-मिति ।** यथा अर्धमासम् । द्वितीयया तत्र न किञ्चिन्न्यूनमिति दर्शयति । अर्धमासमित्युभयान्वयि । **भ्रमरः** मधुमक्षिका अर्धमासं स्वेनैव संचितं नानारसमेकसंपादितं स्वयमेव पिबति । तथा **भ्रमरः** भ्रमं नानायोनिभ्रमणं रात्यादत्त इति भ्रमोऽस्यास्तीति [१]मत्वर्थे खेत्यादियोगविभागाद्रो वा । भ्रमणवान्वा विषयतत्वभ्रमवान्वा । अर्धमासमिति दिक्प्रदर्शनम् । पूर्वजन्मार्जितं मधु जन्मान्तरे भुङ्क्ते । क्षणिकानां कर्मणां कथं फलोप-लम्भकतेति तत्राह– सर्वभूतेषु ईशानः । परमेश्वर एव तत्कर्मफलं **भूतं** प्रभूतं । यद्वा भूतं नश्यत्कर्मापूर्वद्वारा यत्सृष्टवागतं तज्जातं हवीरूपम् । अकल्पयत् । तत्र कर्मास्वतन्त्रं स्वतन्त्रो हरिरिति नोक्तदोषः । तं योगिन इति यथावत् । यथा भ्रमरः अर्धमासं सञ्चितं मधु पिबति । तथा भ्रमस्य संसारसम्बन्धिनः अन्यथामतेर्वा रः अग्निसमो वा तीक्ष्णोवा । यः सः । सञ्चितशब्दः प्रारब्धेतरोत्तरपूर्वाद्युपलक्षकः । तादृशं **अमधु** अनिष्टपुण्यं पापं च पिबति । अश्लेषविनाशौ यापयतीति यावत् । कोपं पिबेति- वदौपचारिकं पानम् । **ईशानः सर्वभूतेषु** अतीतानागतप्राणिजाते

---

१. पा.सू . ५.२.१०७.

यद्भूतं यत् हविर्भूतं स्वाहाररूपं अकल्पयत् । अधिकारी लिङ्गभङ्गानन्तरं मधु मोक्षसुखं पिबति तं योगिनः । सः कोपे वारणे । रः पावकेच तीक्ष्णे चेति विश्वौ ।। ८ ।।

**हिरण्यपर्ण[१] मश्वत्थमभिपत्य[२] ह्यपक्षकाः[३] ।**
**तत्र ते पक्षिणो भूत्वा प्रपतन्ति[४] यथासुखम् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। ९ ।।**

**वादिराजीयम्– हिरण्यपर्णमिति** । अपक्षकाः, अत्र पक्षशब्देनोर्ध्वलोकगमनसाधनज्ञानं गृह्यते । तथा च ये **अपक्षकाः** ज्ञानरहिताः **ते पक्षिणो भूत्वा** श्रवणादिभिर्भगवदपरोक्षज्ञानिनो भूत्वा **हिरण्यपर्णं** सुवर्णसदृशछदम् । **'सुवर्णं'** इति पाठे सुवर्णसदृशवर्णं, श्वेतद्वीपगतं अश्वत्थमभिपद्य यथासुखं **प्रभवन्ति** प्रकृष्टा भवन्ति । **''सपक्षकाः''** इति पाठे **पक्षाः** स्वपक्षस्थाः स्वैः सह मुक्ता इति यावत् । तैस्सहिताः सपक्षकाः **ते** मुक्ताः पक्षिणो भूत्वा ये गच्छन्ति गमनवत्वात्तत्सदृशा भूत्वेत्यर्थः, **''प्रपतन्ति''** इत्यपि क्वचित् पाठः । तत्र प्रकर्षेणाभिवाञ्छितं प्रदेशं गच्छन्ति ये ज्ञात्वा प्रपतन्ति तं योगिनः प्रपश्यन्ति ।। ९ ।।

**सत्यधर्मीयम्–** विषयविषमाः किं मुक्तिमुपयान्ति किं वा नेति शङ्कायां त इदं संपादितसाधनाश्चेन्मुक्ता भवन्तीत्याह– **हिरण्यपर्णमिति** । हिरण्यानि हितकराणि रमणीयानि च पर्णानि यस्य तम् । **अश्वत्थं** श्वो न तिष्टतीति । सर्वं पृषोदरादिकार्यम् । ''छन्दांसि यस्य पर्णानि'' इति भगवदुक्तेः । जगतो वृक्षत्वोक्तौ तन्मध्यपतितो देहोऽपि

---

१. सुवर्णवर्णमिति पाठान्तरम् । २. अभिपद्येति पाठान्तरम् । ३. सपक्षका इति पाठान्तरम् । ४. प्रभवन्तीति च पाठान्तरम् ।

तथेति तम् । तत्रापि हितकर्तेव रमणीयता प्रायेण ब्राह्मणेष्वेवेति तदादिवेदीति मतम् । **अभिपत्य** दैववशात्प्राप्य । **अपक्षकाः** ज्ञानादिपक्षरहिताः ये प्रोक्ते **तत्र** तद्देहे **पक्षिणः** उक्तपक्षयुक्ताः भूत्वा **यथासुखं** ज्ञानानन्दाद्यात्मकतया शोभनानि खानीन्द्रियाणि अस्मिन्कर्मणि तद्यथा भवति तथा प्रः पतन्ति । प्रपतने प्रकर्षं द्योतयन् मुक्ता भवन्तीत्यर्थकः । श्रूयते च– "ब्राह्मणा वै विद्वांसस्ते पक्षिणः । ये अविद्वांसस्तेऽपक्षा इति । तथा यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति" इति तज्ज्ञानसाधनं च श्रूयते । यथा योगिनः सहजपक्षोपेताः पश्यन्ति तथेति ।। ९ ।।

**अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।**
**आदित्यो गिरते चन्द्रमादित्यं गिरते परः ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। १० ।।**

**वादिराजीयम्–** "प्रभवन्ति यथासुखं" इति अधिकारिणां मोक्षोऽभिहितः । तत्र देवानां मोक्षकाले स्वोत्तमप्रवेशप्रकारं लेशेन दर्शयति— **अपानमिति** । अत्रावान्तरप्राणः अपानं **गिरति** संहरति । **आदित्यः** अदितेः पुत्रोऽनिरुद्धः चन्द्रं आदित्यं अनिरुद्धं **परः** उत्तमः कामो गिरति । अनेन क्रमेण **परः** परमात्मा ब्रह्माणं **गिरति** संहरति । उक्तं चानुव्याख्याने—"सोमस्तु वारीशयुतोऽनिरुद्धं विशत्यसौ काममसौ च वारुणीम् । स शेषदेवं स गिरं च सैव वायुं विशत्यज्ञ इतीह निर्णयः" इति ।।१०।।

**सत्यधर्मीयम्–** योगेन शरीरोपसंहारप्रकारं दर्शयति– **अपानमिति** । प्राणो वायुरपानं **गिरति** उपसंहरति । अत्राधिकारी लयकाले स्वगुदं स्वपार्ष्णिनाऽऽपीड्य तत्रत्यमपानवायुं प्राणवायौ विलापयेदिति भावो बोध्यः । एवमुत्तरत्रापि बोध्यम् । उक्तं च श्रीमद्भागवते द्वितीयस्कन्धे–

स्वपार्ष्णिनाऽऽपीड्य गुदं ततोऽनिलं
स्थानेषु षट्सून्नमयेज्जितक्लमः । इत्यादि ।

ततश्च चन्द्रमाः मनः गिरति । अभिमान्यभिमन्यमानयोरैक्यव्यपदेशो महतश्चतुर्मुखादित्यादाविव द्रष्टव्यः । आदित्यः तदभिमन्यमाना बुद्धिः । परः परमात्मा । ततश्चायं योगी स्वीयान् प्राणमनोबुद्धीः सव्यापाराः तत्तदभिमानिलयचिन्तनद्वारा परमात्मनि क्रमेण विलाप्य तदेकध्यान-परोऽवतिष्ठेतेति भावः ।। १० ।।

**[१]एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
तं चेत्सततमृत्विजं मृत्युर्नामृतं भवेत् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। ११ ।।**

**वादिराजीयम्– एकमिति । सलिलार्धं** सलिलं गर्भोदकं अर्धे यथा भवति तथा कृत्वा **उच्चरन्** ऊर्ध्वं चरन् **स** नारायणः **एकं पादं** जीवाख्यं भिन्नांशं ''पादोऽस्य विश्वा भूतानि'' इति श्रुतेः **क्षिपति** इह लोके स्थापयति । अपरं च पादं जात्यभिप्रायेणैकवचनम् । स्वरूपांशत्रयं **समुत्क्षिपति** ऊर्ध्वं वैकुण्ठादिलोकत्रये सम्यक् स्थापयति । ''त्रिपादस्यामृतं दिवि'' इति श्रुतेः । **ऋत्विजं** ऋत्विङ्नियामकं चतुष्पादं भगवन्तं चरन् यदि **सततं** निरन्तरं वेदान्तश्रवणादिना अपरोक्षीकुर्यात् तर्हि तस्याधिकारिणो मृत्युः न भवेत् । तथा **आमृतं** आ समन्तात् मृतं मरणं यस्य तदामृतं, संसारमिति यावत् न भवेत् ।। **''एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन्''** इति पाठे **हंसः** परमशुद्धो भगवान् **सलिलात्** भूते भौतिकरूपात् संसारार्थं **चरन्** एकं पादं भिन्नांशरूपं **नोत्क्षिपति** ऊर्ध्वलोके वैकुण्ठादौ स्वरूपांशत्रयवत् न स्थापयतीत्यर्थः ।। ११ ।।

१. एकं पादं समुत्क्षिपति सलिलार्धं स उच्चरन् । इति प्रथमपादपाठान्तरम् ।

**सत्यधर्मीयम्–** एवं परमात्मध्यानयोगेनैव जीवः संसारान्मुक्तो भवेन्नतु परमात्मा नित्यमुक्तः ईश्वरेण तथैव कृतत्वात्तस्येत्याह– **एकमिति** । **हंसः** हीयतेऽखिलदोषैरिति हम् । आधिक्ये बिन्दुः । अशानायां हि मृत्युरितिवत् । सारत्वात्सः । हंचासौ सश्चेति हंसः । यथोक्तं काठकभाष्ये भगवत्पादैः– ''नित्यं हीनोऽखिलैर्दोषैः साररूपो यतो हरिः । हंस इत्युच्यते तस्मात्'' इति । स भगवान् **एकं पादं** जीवाख्यं विभिन्नांशं **सलिलात्** सलिलोपलक्षितभूतबन्धरूपात् संसारान्नोत्क्षिपति । सदा दुःखा-स्पृष्टं न करोतीत्यर्थः । कथं स्वयं यथा सलिलादुक्तरूपात् **उच्चरन्** नित्यं संसाराद्बहिरेव वर्तमानस्तथा सलिलानां पञ्चभूतेषु पञ्चीकरणे बहुत्वा-न्मुखतो ग्रहणम् । उक्तं च सूत्रकृता– त्र्यात्मकत्वातु भूयस्त्वादिति । तथा भगवत्पादैरपि ''तापापनोदो भूयस्त्वमंभसो वृत्तयस्त्विमाः'' इत्यादिना । जीवानां भिन्नांशत्वं चांशाधिकरणे भगवत्पादैरेव सविस्तरमुपपादितमिति ततोऽनुसन्ध्येयम् ।

स हंसो जीवं स्ववत्कुतो नित्यमुक्तं न करोतीत्यतो वक्ति – **तं चेदिति** । **तं** जीवाख्यं पादं चेद्धंसः संसारादुद्धरेत् नित्यमुक्तं कुर्यादिति यावत् । तर्हि **मृत्युः** संसारबन्धः **अमृतं** मोक्षश्च न भवेत् । कीदृशं **सततं ऋत्विजं** निरन्तरयाजिनम् । यजनं चात्र कायिकं घृतादेर्द्रव्य-स्याग्नौ प्रक्षेपादिरूपम् । वाचिकं जपादिरूपं मानसिकं च ध्यानज्ञानादि-रूपं द्रष्टव्यम् । अयं भावः– अस्त्यत्र जगदीश्वरजीवजडभेदात् त्रिविधम् । तत्रेश्वरस्तु नित्यमुक्तो न विधिप्रत्यवायगोचरः । जडस्य तु चेतनया बहिष्कृतत्वात्तौ न स्तः । इतःपरं जीवोऽपि चेदीश्वरवज्जात-स्तदा कर्मोपासनज्ञानकाण्डानां निरधिकारिकतया बन्धमोक्षादिप्रतिपादक-शास्त्रं व्यर्थमापद्येतेति ।। ११ ।।

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा**
**लिङ्गस्य योगेन स याति नित्यम् ।**
**तमीशमीड्यमनुकल्पमाद्यं**
**पश्यन्ति मूढा न विराजमानम् ।। १२ ।।**

**वादिराजीयम्– अङ्गुष्ठमात्र इति** । यः **अङ्गुष्ठमात्रः** अङ्गुष्ठपरिमाणः **पुरुषः** पूर्णषड्गुणः **अन्तरात्मा** अन्तर्नियामकः सः **अनुकल्पं** प्रतिकल्पं **याति** रामाद्यवताररूपेण भूलोकादिकं प्राप्नोति । तं **नित्यं** ध्वंसाप्रतियोगिनं **ईशं** स्वामिनं **ईड्यं** स्तुत्यं **आद्यं** आदौ भवं विराजमानं **लिङ्गस्य** देहस्य **योगेन** सम्बन्धेन **मूढाः** अज्ञानिनो जनाः न पश्यन्ति । यद्वा— लिङ्गस्य मध्ये योगेन स्वसामर्थेन विशेषेण, स्थितमिति शेषः ।। १२ ।।

**सत्यधर्मीयम्– लिङ्गस्य** तत्तच्छरीररूपस्य **योगेन** सम्बन्धेन ''देहाङ्गुष्ठामितो देहे जीवाङ्गुष्टमितो हृदि'' इत्यादेस्तत्तदङ्गुष्ठमात्रः सन् **आत्मा** आततगुणत्वात्तच्छब्दवाच्यः **पुरुषः** पूर्णषड्गुणः शरीरशायी वा । अन्तर्यात्यायाति च **अन्तरात्मेति** । लिङ्गस्य योगे सत्यंगुष्ठमात्रः स नित्यं न याति । तत्रैव तिष्ठतीति व्यातन्वते । अङ्गुष्टस्य मात्रा परिमितिर्यस्य स तथा तम् । ईशं **ईड्यं** रमास्तुत्यम् । **अनुकल्पं** प्रतिकल्पं **नित्यं** अविनाशिनम् । **आद्यं** आदौ भवं **विराजमानं** स्वप्रभं मूढा न पश्यन्ति । **ईड्यमनुकल्पमित्येकं** वा पदम् । ईड्याश्चते मनवश्चतुर्दशसङ्ख्याः स्तेषां कल्पा अपि यस्मात्तं न पश्यन्तीति वा ।

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ।।

इति काठकोपनिषदत्र जागर्ति । सर्वमनुस्वेच्छामनुसृत्य कल्पयतीति स तं वा । ये न पश्यन्ति । ते मूढा इत्यन्वयो वा । तदसाधारणं चिह्नमप्यनेनाह– **विराजमानं** वौ गरुडे राजमानम् । गरुडारूढमिति ।। १२ ।।

**नात्मानमात्मस्थमवैति मूढः**
**संसारकूपे परिवर्तते यः ।**
**त्यक्त्वाऽऽत्मरूपं विषयांश्च भुङ्क्ते**
**सवै जनो गर्दभ एव साक्षात् ।। १३ ।।**

**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।।**

**वादिराजीयम्– नात्मानमिति** । यः मूढः **आत्मस्थं** जीवान्तर्गतं **आत्मानं** परामात्मानं **नावैति** न जानाति, सः संसारकूपे परिवर्तते । यश्च **आत्मरूपं** भगवत्स्वरूपं **त्यक्त्वा** तत्स्मरणादिकमकृत्वा विषयान् भुङ्क्ते स **जनः** नरः **साक्षात्** अनुपचारेण गर्दभ एव । यः स्वहृदये वर्तमान-मङ्गुष्ठमात्रं अयं पुरुषो न जानाति, यदज्ञानाच्च साक्षाद्गर्दभ एव । तं योगिनः प्रपश्यन्तीति योजना ।। १३ ।।

**सत्यधर्मीयम्– आत्मस्थं** स्वान्तःस्थं **आत्मानं** भगवन्तं यो **नावैति** न जानाति । **संसारकूपे** संसाररूपे कूपे परिवर्तते । **आत्म-रूपं** तदपरोक्षं ज्ञानव्यङ्ग्यं ज्ञानानन्दाद्यात्मकम् । त्यक्त्वा **विषयान्** दारागरादिदुर्विषयान् । स्वस्वकर्मानुसृत्य विवेकविकलः भुङ्क्ते च स जनोऽवन्यां **साक्षात्** प्रत्यक्षसिद्धो **गर्दभः** खर एव । तस्य चैतस्य च न तिलतुलव्यत्यासः । ज्ञानयोग्यमानवजन्म प्राप्यापि तदसंपादने मौर्ख्यमनवधीति वृथा वेदभारभराक्रान्त इति च गर्दभसमतोक्तिस्तस्येति ज्ञेयम् । तं केऽपि लोके लोका न लुलोकिर इति नेत्याह– **योगिन**

**इति** । वैशब्द इदमर्थप्रसिद्धिद्योतकः । संसारकूपे यः परिवर्तते स मूढः आत्मस्थमात्मानं नावैतीत्यन्वयोवा । साक्षात्प्रत्यक्षतुल्ययोरित्यमरः । उक्तं च भागवते उत्तरार्धे–

यस्यात्मबुद्धिः कुणपे त्रिधातुके
स्वधीः कलत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिश्च जले न कर्हिचि-
ज्जनेष्वभिज्ञेषु स एव गोखरः* ।। इति ।। १३ ।।

**गूहन्ति सर्पा इव गह्वरेषु**
**क्षयं नीत्वा स्वेन वृत्तेन मर्त्यान्[१] ।**
**ते विप्रमुह्यन्ति जना विमूढा-**
**[२]स्तैर्दत्तभोगा मोहयन्ते भवाय ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। १४ ।।**

**वादिराजीयम्– गूहन्ति सर्पा इति** । यथा सर्पाः गह्वरेभ्यः निष्क्रम्य **स्वेन** स्वजातिस्वभावेन **वृत्तेन** दंशनरूपव्यापारेण मर्त्यान् **क्षयं** नाशं नीत्वा **गह्वरेषु** गुहासु स्वात्मानं **गूहन्ति** प्रच्छादयन्ति । एवं श्रोत्रादीन्द्रियाणि गोलकेभ्यो निर्गत्य स्वेन वृत्तेन विषयानुभवलक्षणेन मर्त्यान् क्षयं नीत्वा गोलकेषु स्वात्मानं प्रच्छादयन्ति । क्षयं नीत्वेत्युक्तः क्षयः कीदृश इत्यतस्तं प्रदर्शयति— **त इति । ते विमूढाः** विषयानुभवसक्ताः जना **विप्रमुह्यन्ति** परापरतत्वज्ञानशून्याः भवन्ति । न केवलं ते स्वयं विप्रमुह्यन्ति **तैः दत्त-भोगाः** तैरिन्द्रियैस्सम्पादितविषयभोगाः अन्यानपि **मोहयन्ते** मोहं प्राप्नुवन्ति । तदेतन्मोहनं भवाय संसाराय भवति, यदज्ञानात्संसारमिति योजना ।

१. मर्त्या इति पाठान्तरम् । २. तैर्दत्तमाद्यं गूहयन्ते भवार्थे इति पाठान्तरम् । * १०-७२-१३

''**स्वेन वृत्तेन मर्त्याः । ..तैर्दत्तमाद्यं गूहयन्ते भवार्थे**'' इति पाठे **स्वेन वृत्तेन** सकृदनुष्ठितेन श्रवणादिना, परमात्मानं **क्षयं** हृदयगुहाख्यं मन्दिरं **नीत्वा गूहन्ति** आच्छादयन्ति । अनधिकारिणं प्रति नोपदिशन्तीत्यर्थः । तत्र दृष्टान्तमाह— **सर्पा इवेति । गह्वरेषु** गुहासु मण्डलीभूय शयानाः सर्पाः स्वशिरोरत्नमिव । **ते** मर्त्याः **विप्रमुह्यन्ति** भगवान् जीवाभिन्नः, निर्गुणो, निराकार इत्यादिमिथ्याज्ञानं प्राप्नुवन्ति । कुतः **विमूढाः** 'तत्त्वमस्या'दि श्रुतितात्पर्याज्ञानिनः । अधिकारिणस्तु **तैः** ज्ञानिभिः **दत्तं** उपदिष्टं हरिं स्वहृदये निधाय स्वयमपि **गूहयन्ति** अनधिकारिणं प्रति छादयन्ते । तदेतद्गूहनं **भवाय** शोभनाय भवति । ''विद्या ह वै ब्राह्मणमाजगाम'' इति श्रुतेः ।। १४ ।।

**सत्यधर्मीयम्–** इदानीमपि तत्खरतां विताय वक्ति– गूहन्तीति । यथा सर्पाः **स्वेन वृत्तेन** दंशनविषार्पणादिव्यापारेण मर्त्यान् । **गह्वरेषु** अरण्येषु **क्षयं** नाशं नीत्वा **स्वयं गूहन्ति** संवृता भवन्ति । तथेन्द्रियाणि स्ववृत्तेन दुर्विषयप्रसरणेन मर्त्यान् **क्षयं** गृहादिविषयं प्रति नीत्वा । ''क्षयो रोगान्तरे वेश्म कल्पान्तापचयेष्वपि'' इति विश्वः । **गह्वरेषु** दुःखेषु । ''गहनं गह्वरे दुःखे, गह्वरं गहनेऽपि च'' इति विश्वात् दुःखमपि गह्वरपदार्थो ज्ञेयः । गूहन्ति । ते च जना तैर्दत्तभोगाः सन्तो विमूढाः प्रागेवेति विप्रमुह्यन्ति । प्रकर्षेण मोहमाप्नुवन्ति । तानि एवं मोहयन्ते । तन्मोहफलमाह । **भवाय** पुनः संसारायेति । अतोऽपि ते गर्दभाः । तं पश्यन्तश्चैतादृशा इत्याह – **तमिति** ।। १४ ।।

**असाधना वापि ससाधना वा**<br>
**समानमेतद्दृश्यते मानुषेषु ।**

**समानमेतदमृतस्येतरस्य[1]**
**युक्तास्तत्र [2]मध्व उत्सं[3] शमापुः ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।।१४।।**

**वादिराजीयम्–** भगवतो महिमान्तरमाह– **असाधना वेति** । **असाधनाः** मोक्षसाधनरहिताः वा, **ससाधनाः** तत्साधनसहिता मानुषाः तिष्ठन्ति । **तेषु** मानुषेषु **एतत्** ब्रह्म **समानं** न्यूनाधिकभावरहितं दृश्यते, योगिभिरिति शेषः । **उत्तरस्य** पुरुषार्थेषु उत्कृष्टस्य मोक्षस्य विषये **एतत्** ब्रह्म **समानं** तत्तद्योग्यतयेति शेषः । योग्याय मोक्षं दिशति अयोग्याय न नयतीति यावत् । एतदेव विशदयति— **युक्ता इति । तत्र** योग्यायोग्यजीवेषु **ये युक्ताः** योग्यतावन्तो जनाः **मध्वनुतं** मध्वनाम्ना वाय्ववतारेण नुतं प्रेरितं ब्रह्म **समापुः** सम्यक् प्रापुः । "नुत्तनुन्नास्तनि-ष्ठ्यूता विद्धक्षिप्तेरिताः समाः" इत्यमरः । 'मध्व उत्सं समापुः' इति पाठे **मध्वः** मधुनः आनन्दस्य उत् उत्कर्षेण संशेतेऽस्मिन्निति उत्सं शयः, मुख्याधिकारिणं परं ब्रह्म **समापुः** प्रापुरित्यर्थः । तत्र नुमागमाभावः छान्दसः । **अमृतस्येतरस्येति** पाठे अमृतस्य मोक्षस्य **इतरस्य** संसारस्य विषये **समानं** योग्यतानुसारेण उभयप्रदमित्यर्थः ।। १५ ।।

**सत्यधर्मीयम्–** सर्वप्राणिनः प्रति साम्यरूपं भगवन्माहात्म्यमाह– **असाधना वेति** । ये जना **असाधनाः** विद्याविनयादि- साधनरहिताः ये च **ससाधनाः** उक्तगुणसम्पन्नाः तेषु मानुषेषु **एतत्** भगवद्रूपं अतर्यामि-भूतं समानं दृश्यते ज्ञानिभिः ।

---

१. **अमृतस्योत्तरस्येति पाठान्तरम् । २. मध्वनुतमिति पाठान्तरम् । ३. समापुरिति पाठान्तरम् ।**

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनिचैव श्वपाके च पण्डिताः समदर्शिनः[1] ।। इति भगवदुक्तेः ।

किंच तदेतद्भगवद्रूपं **अमृतस्य** सन्मुक्तेः **इतरस्य** असन्मुक्तेश्च समानं भवति । तत्तन्नवविधभक्तिद्वेषपरिपाकानुसारेण सुखदुःख- प्रदातृत्वादिति भावः । तत्राद्यं विवृणोति– **युक्ता इति । तत्र** उक्तगुणे विष्णौ ये **युक्ताः** मनोयोगयुक्ताः ते **मध्वः** मधुनः मध्वित्यानन्द उद्दिष्ठ इति वचनात् ब्रह्मानन्दस्य **उत्सं शं** लहरीरूपं सुखं भगवदानन्दसमुद्र-बिन्दुप्रतिबिम्बमानन्दमिति यावत् । अस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति श्रुतेः **आपुः** प्रापुः । तद्वेषिणोऽप्यानन्दप्रवाह-मापुरिति पूरणीयम् । उत्सः प्रस्रवणं वारिप्रवाहे निर्झरेऽपि चेत्यमरः । तथा च श्रुतिः–

*तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।

उरुक्रमस्य सहि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः इति । व्याख्याता चेयमृग्विष्णुसूक्तव्याख्यावसरेऽस्मत्परमगुरुचरणैः ।। १५ ।।

**उभौ लोकौ विद्यया व्याप्य याति[2]**
**तदाऽऽहुतं चाहुतमग्निहोत्रम्[3] ।**
**मा ते ब्राह्मी लघुतामादधीत[4]**
**प्रज्ञानं स्यात्[5] नाम धीरा लभन्ते ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। १६ ।।**

---

१. भगवद्गीता ५.१८ * ऋग्वेदसंहिता १-१५४-५ २. यान्तीति पाठान्तरम् । ३. तदा हुत्वा चानुहुतमग्निहोत्रम् । इति पाठान्तरम् । ४. मात्रे ब्राह्मीं लघुतामादधाना इति पाठान्तरम् । ५. प्रज्ञामस्येति पाठान्तरम् ।

**वादिराजीयम्– उभाविति ।** यत् धीराः लभन्ते तत्र तत्प्रज्ञा यदा स्यात् । तदा हुतमप्यग्निहोत्रं अहुतं स्यात् अग्निहोत्रादिकर्मफलं ज्ञानेनैव भवतीति यावत् । तदा विद्यया **उभौ लोकौ व्याप्य** उभयत्रापि भोगान्भुङ्क्त्वा परब्रह्म यान्ति । हे राजन्! **ते ब्राह्मी** विद्या **लघुतां मा आदधीत** मा सम्पादयेत् । **तदा हुत्वा चानुहुतमग्निहोत्रम् । मात्रे ब्राह्मीं लघुतामादधाना** इति पाठे **मात्रे** तन्मात्रात्मके देहे **ब्राह्मीं** ब्रह्म वेदः, तत्सम्बन्धिनीं, तत्प्रतिपाद्यमिति यावत् । **लघुतां** असारतां **आदधानाः** मन्वानाः **अनुहुतं** ज्ञानानुकूलतया हुतं पूर्वैरनुष्ठितं अग्निहोत्रं हुत्वा **धीरा** धिया रमन्त इति धीराः **अस्य** भगवतः **प्रज्ञां** अपरोक्षज्ञानं लभन्ते नाम । ततो विद्यया उभौ लोकौ **व्याप्य** प्राप्य तत्र भोगान्भुङ्क्त्वेति यावत् । इमं परमात्मानं **यान्ति** प्राप्नुवन्ति ।। १६ ।।

**सत्यधर्मीयम्–** तद्ब्रह्मविद्यां स्तौति– **उभाविति** । ज्ञानी **विद्यया** ब्रह्मज्ञानेन **उभौ लोकौ** इहपरौ व्याप्य तत्र जायमानं सुखमनुभूयेति यावत् । याति स्वयोग्यं भगवद्रूपमिति शेषः । यस्मादेवं तस्मात् अग्निहोत्रमहुतमपि **आहुतं** सम्यक् हुतं भवति । ब्रह्मविद्यायाः फले अग्निहोत्रादिकर्मफलमन्तर्भवतीति भावः । ''एतमु हवाव न तपति किमहऽ साधु नाकरवम्'' इति श्रुतेः ।

[१]यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावांत्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ।। इति स्मृतेश्च ।

हे राजन् यद्ब्रह्म प्रज्ञानमिति नाम प्रसिद्धं स्यात् यच्च **धीराः** तद्ध्यानरताः **लभन्ते** प्राप्नुवन्ति तस्य ब्रह्मणः सम्बन्धिनी **ब्राह्मी** या विद्या सा ते तव लघुतां कर्मादिवन्नश्वरफलवत्तां **माऽऽदधीत** न करोतु ।

१. भ.गी.२.४६

काम्यकर्मादिकं त्यक्त्वा निष्कामकर्मनिरतो भवेति भावः । तं भगवन्तं योगिनः प्रपश्यन्ति ।। १६ ।।

**एवंरूपो महानात्मा[1] पावकं पुरुषो गिरन्[2] ।**
**यो वै तं पुरुषो[3] वेद तस्येहात्मा न रिष्यते[4] ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। १७ ।।**

**वादिराजीयम्– एवं रूप इति ।** एवंरूपः पूर्वोक्तगुणविशिष्टः **महान्** व्याप्तः **आत्मा** अन्तर्नियामकः **तं पावकं** नामस्मरणमात्रेण सकलपातक-नाशकं **पुरुषं** पूर्णषड्गुणं भगवन्तम् **इह** अधिकारिवर्गे **यः अङ्गिरः** अङ्गिनि अङ्गदेवतायुक्ते भगवति रमते इत्यङ्गिरः पुरुषो अधिकारी वेद तस्य **आत्मा** स्वरूपं **न रिष्यति** न दुःखाद्यनर्थं प्राप्नोति । यद्वा **आत्मा** परमात्मा **न रिष्यते** फलदो भवतीति यावत् । 'प्रयोजनाक्षमे नष्ट' इति प्रयोगस्य लोके बहुलं दर्शनात् । उक्तं चैतत् ''तस्याहं न प्रणश्यामि'' इति वाक्य-व्याख्यानावसरे । **पूज्यं पावकं पुरुषो गिरन्** इति पाठे **पावकं** अग्निम् । यद्वा **पावकं** पवित्रसम्पन्नं **कं** वायुं **गिरन्** संहरन् आस्ते यः तं वेदेत्यर्थः ।। १७ ।।

**सत्यधर्मीयम्– एवंरूपः** ज्ञानधनो **महान्** सर्वोत्कृष्टः **आत्मा** आदानकर्तृत्वात्संकर्षणनामा पुरुषः **पावकं** अग्निं उद्गिरन् । मुखतः य आस्ते यश्च पुरुषः तमेवं वेद । न मृत्युकालादयः स्वतन्त्रा स्वतन्त्रस्तु स एवेति जानाति । तस्याधिकारिण इह आत्मा **न रिष्यते** न शरीरादुत्क्रान्तिं याति । उत्तमाधिकारिणाम् । उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः । उतास्मात्प्राणा उत्क्रामन्ति । आहोस्वित् नेति नेति

१. महान् पूज्यं इति पाठान्तरम् । २. पुरुषोऽङ्गिर इति पाठान्तरम् । ३. पुरुषमिति पाठान्तरम् । ४. रिष्यतीति पाठान्तरम् ।

होवाच याज्ञवल्क्यः । अत्रैव समवलीयन्ते न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेदेति श्रुतिः । ब्रह्मैव सन् स्वयोग्यतानतिरेकेण पूर्णः सन् ब्रह्म निरवध्यनन्याधीनगुणपूर्णम् । अप्येतीति तदंशस्य तिरोहितार्थस्यार्थः । येषामात्मा न रिष्यते ते योगिनः ।। १७ ।।

**सदासदासत्कृतः स्यान्न[1] मृत्युरमृतं कुतः ।**
**सत्यानृते सत्यसमानुबन्धिनी**
**सतश्च योनिरसतश्चैकमेव ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। १६ ।।**

**वादिराजीयम्–** **सदाध्वसात्कृतोऽस्यान्नमिति । सतः** सज्जनस्य **असतः** दुर्जनस्य च **योनिं** कारणं, पोषकं तथा । यद्वा **सतः** मूर्तस्य **असतः** अमूर्तस्य **योनिं** कारणंम् । "मूर्तं सदिति सम्प्रोक्तं" इति श्रुतेः । **एकं** प्रधानम् । **अन्नं** अन्नस्थम् अदनात् अन्ननामकं भगवन्तम् । **अध्वसात्** अध्वने सर्वम् इत्यध्वसात् । मोक्षमार्गार्थं कृतः कुर्वतः, अल्पाहारं कुर्वत इति यावत् । तदेव **अमृतं** अमृतप्रायं कुर्वतः, अल्पाहारेऽप्याहारचिन्तामकुर्वतः इति यावत् । **अस्य** ज्ञानिनः **मृत्युः** संसारो नेति योजना । पुनः कीदृशस्य? **सत्यसमानुबन्धिनी** सत्यं समत्वेनानुबन्धीत इति सत्यसमानुबन्धिनी सत्यस्यैव समाने सत्यानृते "सत्यमोमिति सम्प्रोक्तं यन्नेत्याहानृतं हि तत्" इति स्मृतेः । "ओमिति सत्यानृतं तदेतत्पुण्यं फलं वाचः" इति श्रुतेश्च । **सत्यं** सति सत्पात्रलाभे धनालाभे वा नेति वचनं, ते उभे **कृतः** कुर्वतः ।। १८ ।।

**सत्यधर्मीयम्–** समस्तजगत्कारणत्वलक्षणमहिमान्तरमाह– **सदेति ।** अयमधिकारी **सदा** सर्वकालं सत्कृतः नित्यसच्चिदानन्दरूपोऽहमविद्या-

---

१. सदाध्वसात्कृतोऽस्यान्नमिति पाठान्तरम् ।

रचितशरीराभिमानेन दुःखी सञ्जातः भगवदुपासनया च तदपगमे पुनरुक्तस्वरूपोऽभिव्यक्तिमान् भवेयमिति सदा सत्कारवान् भवेदित्यर्थः ।

ननु प्रदर्शितान्यथाकारस्य कदाऽप्यनपगमे कथञ्चिदानन्दाकाराख्य-व्यक्तिप्रत्याशेत्यतो वक्ति– **सदा न मृत्युरिति** । यस्मात्सदा न **मृत्युः** संसारः तस्य सांतत्वेन भगवदपरोक्षनिवर्त्यो भवतीति भावः । विपक्षेऽनुकूलतर्कमाह– यदि सदा मृत्युः स्यात् तर्हि विद्ययाच विमुच्यते तरति शोकमात्म- विदित्याद्युक्तममृतं मोक्षः कुतः स्यात् न कुतोऽपि । भवति चाविद्यादितो मोक्षस्य प्रमितत्वात्तस्मात्सदा मृत्युर्बन्धो नास्त्येवेति विपर्ययपर्यवसानं च बोध्यम् । नात्मानमवजानीयात् सदासत्कृत-स्तिष्ठेदिति विष्णुस्मरणात् ।

ननु प्रकृत्यादिबन्धरूपस्य नित्यत्वेन तत्र तत्रोक्ते कथमेतदित्यत आह– **सत्यानृते इति** । नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमिति नित्यमित्यर्थे सत्यशब्दप्रयोगादत्रापि सत्यमिति नित्यमुच्यते । अनृतमिति परिणामित्वादनित्यमुच्यते ।

ऋगताविति धातोस्तु पूर्वावगतवत्सदा ।
स्थितेर्ब्रह्मर्तमित्युक्तमनृतं परिणामतः ।। इत्यादिवचनात् ।

ततश्च ते नित्यानित्ये प्रकृत्यादी । **सत्यसमानुबन्धिनी** सत्येन भगवता समानः अनुबन्धः विनश्वरत्वं ययोस्ते तथा । अनित्यग्रहणं दृष्टान्तार्थम् । यथा अनित्यं भगवद्विनाश्यं तथा नित्यमप्युपचितभागपरि-त्यागेनातथा भवतीति भावः । येषां विकारो नित्यं स्यादेतद्विवक्षयैव-मुक्तमिति भावः । स इदं सर्वं विलापयतीति श्रुतेः । युक्त्यन्तरं चाह– **सत इति** । चो यस्मात् **एकमेव** ब्रह्म **सतः असतश्च** कार्य-कारणात्मकप्रपञ्चस्य **योनिः** निमित्तकारणं तस्मादपि तन्नाशकं तदेकमेवेति भावः । यतो वा इमानि भूतानीति श्रुतेः ।। १८ ।।

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा**
**न दृश्यतेऽसौ हृदये निविष्टः ।**
**अजश्चरो दिवारात्रमतन्द्रित-**
**स्तं मत्वा कविरास्ते प्रसन्नः**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। १९ ।।**

**वादिराजीयम्– अङ्गुष्ठमात्र इति ।** चरतीति **चरः** यः सृष्ट्यादौ नित्यं प्रवर्तते । तं नित्यमतन्द्रितो भूत्वा **मत्वा** मनोविषयं कृत्वा **कविः** ज्ञानी **प्रसन्नः** स्वरूपसुखमनुभवन् सन् आस्ते ।। १९ ।।

**सत्यधर्मीयम्–** अङ्गुष्ठमात्रः **अन्तरात्मा** अन्तर्यामी हृदये निविष्टोऽपि । **असौ** भगवान् न दृश्यते । विना स्वप्रसादमधिकारी सामर्थ्येन जननवांश्चेत्सदृश एव भवेदित्यत आह– **अज इति ।** प्रकृतिवदचेतनः किमित्यतः **चरः** विशिष्टचेतन इति । दिवारात्रं **अतन्द्रितः** आलस्यहीनः । यः कविः । ततः तं प्रसादसुमुखतयाऽऽगतम् । तकारश्चागत इत्यनेकार्थध्वनिपदमञ्जरी । **मत्वा** ज्ञात्वा प्रसन्नः आस्ते । एतं योगिनः ।।१९।।

**तस्माच्च वायुरायातस्तस्मिंश्च प्रलयस्तथा ।**
**तस्मादग्निश्च सोमश्च तस्माच्च प्राण आगतः ।। २० ।।**

**तत्प्रतिष्ठास्तदमृतं लोकास्तद्ब्रह्म तद्यशः ।**
**भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र च ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। २१ ।।**

**वादिराजीयम्–** इदानीं भगवतः सृष्टिस्थितिसंहारकर्तृत्वादिमहिमानमाह– **तस्मादिति । वायुः** मुख्यप्राणः, प्रलयस्थस्येति शेषः । **प्राणः** अहङ्कारिकः ।

**तद्** ब्रह्म **प्रतिष्ठा** सर्वस्याश्रयः । तदमृतम् । तद्ब्रह्म । **लोकाः** सर्वलोक-नियामकम् । **तद्यशः** यशोरूपम् । तस्माद्भूतानि ।। २०-२१ ।।

**सत्यधर्मीयम्–** अवान्तराणि कारणानि स तु सर्वथेदमवर्जनीयं मुख्यकारणमित्यावेदयति– **तस्मादिति । तस्मात्** विष्णोः वायुः आयातः । प्रलीयत इति **प्रलयः** तदुत्पन्नस्तदाश्रित इति भावः । **तस्मात्** हरिमुखात् अग्निश्चायात इत्यन्वयः । मनसः सोमः । तस्मादेव प्राणः मुख्यः । तस्मिंस्तेन वा प्रतिष्ठा स्थितिर्येषां वाय्वादीनां ते तथा । लोकाश्च तदमृतं तत् महद्यशः शब्दवाच्यम् । तस्मादेव भूतानि जज्ञिरे । तत्रैव लयं याति । यतो वा इमानीत्यादेः । योगिनः ।। २०-२१ ।।

**उभौच देवौ पृथिवीं दिवं च**
**दिशश्च शुक्रं भुवनं बिभर्ति ।**
**यस्माद्दिशः सरितश्च स्रवन्ति**
**तस्मात्समुद्रा विहिता महान्तः ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। २२ ।।**

**वादिराजीयम्– उभाविति । उभौ च देवौ** सूर्यचन्द्रमसौ **दिवं** स्वर्गं, **भुवनं** तदितरलोकं दिशश्च शुक्रं बिभर्ति । **तस्मात्** ब्रह्मणः सकाशात् **दिशः** सार्काः दिशः स्वकार्यं कुर्वन्ति । सरितश्च स्रवन्ति । तस्मादेव **महान्तः** लक्षयोजनादिपरिमाणा समुद्राश्च विहिताः । एतादृशगुणविशिष्टं भगवन्तं योगिन एव प्रपश्यन्ति ।। २२ ।।

**सत्यधर्मीयम्–** पृथिवीं दिवं चेत्येतावुभौ लोकौ । तथा दिशः । भुवनं चेत्येतत् । **शुक्रं** शोकरहितं ब्रह्म कर्तृ बिभर्ति । यस्मादेव **दिशः** तत्सम्बन्धिन्यः प्राच्याद्या नद्यः दिशः प्रतीति वा । **स्रवन्ति** प्रवहन्ति ।

तस्मादेव महान्तः समुद्राः विहिताः । एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः । एतस्य वाऽक्षरस्य प्रशासने गार्गि प्राच्यो नद्यः स्यदन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां दिशमन्वित्यादेः । यद्भूतयोनिं परिपश्यन्ति धीरा इति श्रुतिः । तद्योगिनः ।। २२ ।।

**यः सहस्रं सहस्राणां पक्षानाहृत्य सम्पतेत् ।**
**नान्तं गच्छेत्कारणस्य यद्यपि स्यान्मनोजवः ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। २३ ।।**

**वादिराजीयम्–** साकल्येनावेद्यत्वलक्षणं भगवन्महिमानमाह– **यः सहस्रमिति** । यः सहस्राणां सहस्रं **पक्षान्** गतिसाधनत्वसाधर्म्यात् तच्छब्दप्रतिपाद्यान् भारतादिग्रन्थान् **आहृत्य** सम्यगधीत्य **सम्पतेत्** भगवन्तं सम्यग्विचारयेत् यथा मनोजवः स्यात् । तथापि **कारणस्य** जगत्कारणस्य भगवतः अन्तं न गच्छेत् । यद्वा– सहस्राणां मासानां पक्षान् पुनः सहस्रपक्षांश्च समाहृत्य सम्पतेत् सम्यग्जीवेत् यः, यद्यपीत्यादि योजना ।।२३।।

**सत्यधर्मीयम्–** योऽधिकारी सहस्राणां सहस्रं पक्षान् **आहृत्य** संपाद्य संपतेत् । तत्तत्सिद्धान्तान् सहस्राणां सहस्रं आहृत्य सम्पाद्येत्यान्तरङ्गिको भावः । **संपतेत्** ज्ञातुमुद्यतो भवेत् । सहस्राणां सहस्रं कोटिकल्पमिति वा । **कारणस्य** भगवतः **अन्तं** प्रान्तं न गच्छेत् । न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमापेत्यादेः । यद्यपि स्यान्मनोजवस्तथापि यस्य नान्तं गच्छेत् ।। २३ ।।

**अदर्शने तिष्ठति रूपमस्य**
**पश्यन्ति चैनं सुसमिद्धसत्वाः ।**

**हीनो मनीषी मनसाभिपश्ये-**
**द्य एवं विदुरमृतास्ते भवन्ति ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। २४ ।।**

**वादिराजीयम्– अदर्शन इति । अदर्शने तिष्ठति** दर्शनविषयो न भवतीति यावत् । तर्हि तद्दर्शनं शून्यं स्यादिति तत्राह— **पश्यन्तीति । सुसमिद्धसत्वाः** सुष्टु समिद्धं अभिवृद्धं सत्वं सत्वगुणो येषां ते तथा **एनं** भगवन्तं पश्यन्ति । तद्दर्शने साधनान्तरमपेक्षितमिति भावेनाह– **हीन इति । हीनः** रागद्वेषादिरहितः **मनीषी** शास्त्रार्थज्ञानवान् **मनसाऽभिपश्येत्** जानीयात् । तज्ज्ञानफलमाह– **य एनमिति** ।। २४ ।।

**सत्यधर्मीयम्– अस्य** एतस्य अशब्दवाच्यस्य वा विष्णोः । यद्रूपं तत् **अदर्शने** प्रेमजनदर्शनाविषयतायां तिष्ठति । ये **सुसमिद्धसत्वाः** अभिवृद्धज्ञानास्ते एनं पश्यन्ति । **हीनः** रागद्वेषाद्यै रहितः अथवा गर्ह्यत्वेनात्मानं मूर्खं दर्शयन्निति हीनः । हीनो गर्ह्य इति विश्वः । **मनीषी** मनसा करणेन यं पश्येत् । य एनं विदुस्ते अमृताः मुक्ताः भवन्ति योगिनः ।। २४ ।।

**इमं यः सर्वभूतेषु चात्मानमनुपश्यति ।**
**अन्यत्रान्यत्र युक्तेषु स किं शोचेत्ततः परम् ।। २५ ।।**

**वादिराजीयम्– इममिति** । योऽन्यत्रान्यत्र अन्यान् यस्मिन् लोकेषु सम्बन्धेषु इममात्मानमनुपश्यति स **ततः परं** तादृशज्ञानानन्तरं शोचेत्किं? संसारदुःखं प्राप्नुयात्किं ? न प्राप्नुयादित्यर्थः ।। २५ ।।

**सत्यधर्मीयम्– अन्यत्रान्यत्र** देहेषु तथेन्द्रियादिषु च **युक्तेषु** तत्राभिमानिषु सन्नपि यः इममेकमेव । सर्वभूतेषु **आत्मानं** अन्तःस्थितं

अनुपश्यति । स ततः परं किं किमर्थं **शोचेत्** शोकं प्राप्नुयात् । संसारं न पुनर्यायादिति भावः । तथाहि श्रुतिः "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति ।। २५ ।।

**यथोदपाने महति सर्वतः संप्लुतोदके ।**
**एवं सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ।। २६ ।।**

**वादिराजीयम्– यथोदपाने इति** । यथा तृषितस्य **उदपाने** कूपे तृषानिवृत्तिरूपं यत्प्रयोजनं भवति, **सर्वतः सम्प्लुतोदके** महति ततोऽधिकं प्रयोजनं भवति, एवं सर्वभूतेषु ब्रह्म विजानतो ब्राह्मणस्य काम्यकर्मादिना जायमानं स्वर्गादिफलं, ततोऽप्यधिकं मोक्षादिफलं भवतीत्यर्थः । अनेन स्वर्गादिसर्वफलसाधनज्ञानविषयत्वरूपं भगवन्माहात्म्यमुक्तं भवति ।।२६।।

**सत्यधर्मीयम्–** तज्ज्ञानफलं स्तौति – **यथेति** ।। उदमुदकं पीयतेऽत्रेति **उदपानं** कूपादिः **महति** सर्वतः संप्लुतमुदकं यस्मिन् ह्रदादौ विहरतः पुंसः तस्मिन्नुदपाने प्रयोजनं न कृतकृत्यत्वादेवं सर्वेषु भूतेषु विजानतः परमात्मानं लक्षलाभेऽलाभे चैकसूकरस्य कुशलो न चिन्तायुतो भवेत्तथाऽपरोक्षतोऽनुभवतः ब्राह्मणस्य परोक्षतोऽनुभवतः स्वर्गादिजनक-कर्मादिना कृत्यं नास्तीति शेषः । आह च भगवान्–

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावांत्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः । इति ।

एवमेव व्याख्यातोऽयं श्लोकस्तद्भाष्यादौ क्षयिष्णुसुखचिन्ता न भवे-त्स्वरूपानन्दलाभ इति भावः ।। २६ ।।

**अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः ।**
**आत्माऽहमस्य सर्वस्य यच्च नास्ति यदस्ति च ।। २७ ।।**

**वादिराजीयम्–** इदानीं भगवतो गुणान्तरप्रतिपादकं भगवता जीवान् प्रत्युदीरितं वाक्यमनुवदति भगवान् सनत्सुजातः । यद्वा अन्तर्याम्यपेक्षया सनत्सुजातस्येदं वाक्यं ''अहं मनुरभवम्'' इत्यादि वामदेववाक्यवत् । उक्तं च भगवता सूत्रकारेण– ''ओं शास्त्रदृष्ट्या तूपदेशो वामदेववत् ओं'' (२-१-३०) यदिदानीं अस्ति यच्च नास्ति अस्य सर्वस्य **आत्मा** स्वामी ॥ २७ ॥

**सत्यधर्मीयम्–** सर्वभूतेष्वित्युक्तान्तर्यामिव्याप्तिमेव शृङ्गग्राहिकया दर्शयति– **अहमिति । अहं** मदंतर्यामी

अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि ।
तत्सम्बन्धात्तु जीवेषु तत्सम्बन्धादचित्स्वपि ॥

उपचारेण वर्तत इति वचनात् ।

अयं भावः– परमेश्वरजीवशरीरेषु अहमादिशब्दः सङ्कलय्य विद्वद-विद्वत्साधारण्येन प्रयुज्यते । तच्चायःपिण्डमधिकृत्यायो दहतीतिवत् । तत्र विद्वांसस्तैः शब्दैर्मुख्यतः परमात्मानमेव वदन्ति तेषां तत्रैव मुख्यत्व-स्योदाहृतवचनसिद्धत्वात् विवेकिन इव तच्चायःपिंडे दहति शब्दं वह्नौ । अज्ञानिनस्तु जीवमत्यन्तपामरास्तु देहं तैश्शब्दैरुपचारेण वदन्ति अयसीव दहतिशब्दम् । तस्मादत्र ज्ञानिनः सनत्सुजातस्यां– तर्यामिविवक्षयैव प्रयोगो नत्वन्यथा । विस्तृतं चैतच्छास्त्रदृष्ट्येत्यधिकरणे । तथाच **वो** युष्माकं धृतराष्ट्रादीनां **माता पिता** तदन्तर्यामीत्यर्थः । अहं मदन्त-र्यामीच एक एवेत्यर्थः । एवमुत्तरत्रापि । **आत्मा** स्वामी । नास्ति इदानीं तस्य सर्वस्येत्यन्वयः । यत्रास्ति अतीतमेष्यश्च । अस्ति वर्तमात्रकालिकम् । तदपि अहमेव भगवदुक्तिः । वः माता अहम् । अहं पिता पुनः । पुत्रश्चास्मि । अस्य सर्वस्यात्माऽऽदानादिकर्ता ।

''पिताऽहमस्य जगतो माता धाता पितामह'' इत्याह भगवान्वासुदेवः ॥ २७ ॥

**पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।**
**ममैव यूयमात्मस्था न मे यूयं न चाप्यहम् ॥ २८ ॥**

**वादिराजीयम्–** भारतेति धृतराष्ट्रं प्रति सनत्सुजातस्य सम्बोधनम् । भगवद्वाक्यपक्षे भा दीप्तिः, ज्ञानमिति यावत् । तस्मिन् रतेति आसक्तेति भगवतो जीवान् प्रति समुदायापेक्षया सम्बोधनम् । हे जीवाः! यूयं ममैव **आत्मस्थाः** मदाधाराः । न मे यूयं, न चाप्यहमिति स्वस्य लेपाद्यभावसूचनार्थः ॥ २८ ॥

**सत्यधर्मीयम्–** एवमधिभौतिकेषु तद्व्याप्तिं प्रदर्श्याधिदैवेष्वपि तं दर्शयति– **पितामह इति । स्थविरः** आद्यः **पितामहः** ब्रह्मा पिता तत्पिता विष्णुश्च । अन्यथा पितापुत्रोऽस्म्यहमिति पुनरुक्त्यापत्तेः । पुत्रः विरिञ्चसुतो भवः इति केचित् । लोकवैलक्षण्यं प्रकटयितुमेकस्यैव पितृपितामहपुत्रत्वोक्तिरिति निर्व्यलीकः पन्थाः ।

पितृभ्रातृसखित्वेन स्वामित्वेन यतो हरिः ।
बहुधा गीयते वेदैर्जीवांशस्तस्य तेन तु ॥ इति वचनात् ।

**यूयं** युष्मदन्तर्यामिणः मम **आत्मा** देहः । अज्ञदृष्ट्या जीवमधिकृत्य वक्ति – **नेति । यूयं** धृतराष्टादयः **मे** सनत्सुजातस्य मे सम्बन्धिनो नेत्यर्थः । अहमपि वः सबन्धी नेत्यर्थः । ''कस्य के पतिपुत्राद्या मोह एवतु केवलम्'' इत्यादेः ॥ २८ ॥

**आत्मैव स्थानं मम जन्म चात्मा**
**ओतप्रोतोऽहमजरः प्रतिष्ठितः[1] ।। २९ ।।**

**वादिराजीयम्–** इदानीं स्वस्यानपेक्षत्वमाह– **आत्मोति** । मम **आत्मैव** परमात्मैव स्थानमाधारः । "स्वे महिम्नि" इति श्रुतेः । आत्मैव **जन्म** प्रादुर्भावनियामकः । अहमात्मन्येव ओतप्रोतश्च । कीदृशः ? **अजरप्रतिष्ठः** अजरः जरारहितः, प्रतिष्ठा वैकुण्ठादिलोके स्थितिर्यस्य स तथा ।।२९।।

**सत्यधर्मीयम्–** पुनरन्तर्यामिणमधिकृत्य वक्ति– **आत्मैवेति । मम** मदन्तर्यामिणः **स्थानं** अवस्थानप्रदेशः । **आत्मैव** स्वयमेव । "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इति श्रुतेः । जन्म अभिव्यक्तिरपि मम सकाशादेव नान्यस्मात् । **आत्मा** देहोऽपि अहम् । चिद्रूपत्वात्तस्य देहं विशिनष्टि– यस्मिन् देहे अजरं यथा भवति तथा प्रतिष्ठितोऽयं जगत्प्रवाहः ओतप्रोतः कन्थायां तिर्यग्गृजुतंतव इव सन्निहित इति ।। २९ ।।

**अणोरणीयान् सुमनाः सर्वभूतेष्ववस्थितः ।**
**पितरं सर्वभूतानां पुष्करे निहितं विदुः ।। ३० ।।**

**।। इति श्रीमन्महाभारते शतसाहस्र्यां संहितायाम् उद्योगपर्वाणि सनत्सुजातीये पञ्चमोऽध्यायः समाप्तः ।।**

**वादिराजीयम्–** पुनरपि भगवतो महिमानमाह सनत्सुजातः— **अणोरणीयानिति** । अणोः सूक्ष्मादप्यणीयान् सूक्ष्मतरः । **सुमनाः** सुष्ठु चिदानन्दस्वरूपं मनो यस्य स तथा । **पुष्करे** हृदयकमले **निहितं** सन्निहितं

---

१. अजरप्रतिष्ठ इति पाठान्तरम् ।

**विदुः** जानन्ति । योगिनः एतादृशगुणविशिष्टं भगवन्तं योगिन एव प्रपश्यन्तीति योजना ।। ३० ।।

**सनत्सुजातवाक्यार्थो वादिराजयतीरितः ।**
**सङ्क्षेपात् मन्दबुद्धीनां विज्ञानाय प्रदर्शितः ।।**

**।। इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातीये श्रीवादिराजतीर्थविरचिते विषमवाक्यप्रकाशे पञ्चमोऽध्यायः ।।**

**सत्यधर्मीयम्–** अणोरणीयसामप्यणुः । **सुमनाः** शोभनं सर्वजगत्पोषणोद्योगि मनो यस्य । सर्वभूतेष्वित्युपसंहारः । **पितरं** पालकम् । **पुष्करे** हृदयकमले **निहितं** सन्निहितं विदुः ज्ञानिनः । पुष्करे अम्भसि समुद्र इति यावत् । अब्धिशयन इति । "पुष्करं पयः करिकराग्रयोः" इति विश्वः ।। ३० ।।

**।। इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वाद्यनेकगुणसंपन्नश्रीमद्रामचन्द्रदेवदिव्यपादपद्माराधकश्रीमत्सत्यवरतीर्थश्रीपादकरकमलसञ्जात-श्रीमत्सत्यधर्मयतिकृतायां उद्योगपर्वणि सनत्सुजातीयव्याख्यायां पञ्चमोऽध्यायः समाप्तः ।।**

**।। समाप्तश्चायं ग्रन्थः ।।**

**।। श्री कृष्णार्पणमस्तु ।।**